भा·ग०

ए०
१

ॐ श्रीगणेशाय नमः ॥ ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासा
य श्रीनारायणाय विजयते परानन्दकृष्णपादरजः स्रजः याधतां मूर्ध्नि जायते महेन्द्रादिमहः स्रजः १ ऊनै
कत्रिंशताध्यायैर्मुक्तिरेकादशे ततः जायते येतिहासाद्यैः समासव्यासरूपतः २ नारदो वसुदेवाय समासेन स्ववर्णि
यत् भगवानुद्धवायाथ विस्तरेणाप्यतिभिः ३ तत्रानुप्रथमेध्याये यदुवंशस्य संक्षयः उपात्तेनाविरोधाय मौसल
व्यपदेशतः ४ प्रवृत्तिः परानन्दकृष्णलीलानुवर्तिता तन्निवृत्त्या परानन्दपदारोहोनुवर्ण्यते ५ एवं ताव
द्दशमस्कन्धे भूभारोत्तारणाय निजविभूतिविभूषितयदुवंशस्य यदुवंशावतारितसकलगुणगणस्य निजदुरित
शमनैकहेतोर्भगवतः श्रीकृष्णस्य तदुचितप्रवृत्तिविडम्बनेन तच्छ्रवणस्मरणादिपराणां परमानन्दकरणं ।
क्रीडा निरूपिता । अथेदानीमुपरमितयोगमायावैभवस्य भक्तानामात्मतत्त्वोपदेशपूर्वकं भूतलेवतारि
तानां चाधिकारिणां सुरांशानां मौसलव्यपदेशेन तदधिकारियदप्रापणपूर्वकं च ब्रह्माद्यनुग्रहाय।
च निजपदारोहो निरूप्यते तत्र कुरुक्षेत्रे यात्रायामविरलस्य वसुदेवस्य कर्मणा कर्मनिर्हारोपायास्पृ
तदध्यतो मित्येवं कर्मयोगः प्रवृत्तो नारदादिभिः कर्मयोगो निरूपितः कर्मणा कर्मनिर्हार एष साधुनि
रूपितः यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुष इत्यादिनाऽनेन च विशुद्धसत्त्वस्य हृत्स्थरामोपरमेश्व
रत्वेन ज्ञातवतः षड्भिर्नयनाध्याये श्रीकृष्णेनात्मतत्त्वमुपदिष्टं वचोवः समवेनार्पितानेन तदुपमन्न
हे यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृत इत्यादिना तच्च विषयभोगातिशयेन पुनस्तिरोहितसाक्षी।
तदेवेदानीं नारदमुखेन प्रथमं पंचाध्यायैर्निरूप्यते तत्र प्रथमेध्याये वैराग्योत्पादनाय यदुकु।
लस्य ब्रह्मशापव्यपदेशेनात्युन्नतविषयसुखानामप्यनित्यता प्रतिपाद्यते ततश्चतुर्भिर्निमिजा
यनेसंवादेन सपरिकरपरमात्मतत्त्वनिरूपणं ततः षष्ठे भगवदुद्धवसंवादः प्रस्तुतः ततस्त्रिषु।

राम:
१

विंशत्याउद्धवं प्रति भगवता तत्त्वनिरूपणं ततो द्वाभ्यां मौसुलं यक्रीडेत्येवमेकत्रिंशताध्यायैरेकाद
शस्कंध प्रवृत्तिः तस्य च यथ्यामतिव्याख्यानमारभ्यते ॰ तत्र मौसुलप्रसंगार्थं पूर्वस्कंधार्थमनुवद
ति श्लोकद्वयेन अवतारयद्भिरित्युद्गागमोवक्तव्यः ज विष्ठं वेगतरमतिशीघ्रं द्विसाधर्यं वसायिनमित्य
र्थः कलिं कलहं प्रसिद्धं तत्र एव देवविदुरोऽपि १ सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः सुब
हुयथा भवति तथा वक्रुवाणानित्यर्थः तदेवाह दुर्द्यूत हेलन कचग्रहणादिभिरिति दुर्द्यूतं कपटद्यूतं हेल
नमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणं एतान्यादिर्येषां गरदानजतुगृहदाहादीनां॥

श्रीशुक उवाच कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः भुवोऽवतारयद्भारं ज
विष्ठं जनयन्कलिं १ ये कोपिताः सुबहु पांडुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्र
हणादिभिस्तान् कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभारमी

शः कृत्वा ये कोपिताः तान्पांडुसुतान्निमित्तं कृत्वा इतरेतरतः उभयोः पक्षयोः समेतान्मिलितान्नृपान्ह
त्वा क्षितिभारं निरहरत् जहार यद्वा ये कोपिताः ये च कोपिताः तानितरेतरतः परस्परं निमित्तं कृत्वेत्य
न्वयः एतावत्प्रकटदैत्याः पूतनादयः तान्स्वयमेव हतवान् ये तु दैत्या बांधवच्छद्मना स्थिताः तान्पर
स्परं निमित्तं विधाय भूभारमपाकृतवानित्यर्थः अधुना भूभारभूत राजपत्तनासमागतभूपालैर्दैत्यैर्नि
वहेलाया स्वमायया प्रपंचविधानेनान्योन्यतः कलहं कुर्वाणाः क्षयं गच्छंतः तेन जानंतीति स्वमहिमान
मग्नाध्यायैर्निरूपयति यदुक्तं गीतासु दैवी ह्येषा गुणमयी मम माया दुरत्ययेति तदेतत्सा परमेश्वरःइति।

अपि च भूभारोत्था इति अन्यानपि भुवो भारभूताः राजन्यजनाः सैन्यैर्युक्तास्तेषां पतनात्मेति वा स्वबाहुभिर्गुप्तैः ।
परिरक्षितैर्यदुभिर्विवाहादिच्छलेन निरस्य हत्वा बाहुभिरिति बहुवचनं बलेन अर्जुनभुजाभिप्रायेण नन्वेवं कृ-
तकृत्यं कोऽधुना तिष्ठतात्वा तस्मै कस्माय यास्यानन्तुं हतीति तत्राह अप्रमेयः प्रमातुमशक्यः चिन्तामाह मन्ये-
ऽवनेरिति नन्विति वितर्के अवनेर्भूमेर्भारो यद्यपि लोकप्रतीत्यागतः तथाप्यहमगतमेव मन्ये यद्यस्मा-
दविषह्यमसोढुमशक्यं यादवकुलमित्यनेनैव स्ववंशत्वात् स्वयं हननमनुचितमिति सूचितं तर्हीदमप्यन्यै-
र्वघात्यतां तत्राह ३ नैवेति अन्यतो देवादिभ्योऽप्यस्य यादवकुलस्य परिभवस्तिरस्कारो न भवेत् कुतः

भूभारराजन्यजनानपहृत्य निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः मन्येऽवनेर्न नु ग-
तोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते ३ नैवान्यतः परिभवोऽस्य
भवेत्कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यं अन्तःकलिं यदुकुलस्य
विधाय वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ४ एवं व्यवसितो राजन्सत्यसंकल्प
ईश्वरः शापव्याजेन विप्राणां संजह्रे स्वकुलं प्रभुः ५ ॥ ॥ ॥

मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य किं च विभवोन्नहनस्य विभवैर्गजतुरगादिभिरु-
न्नद्धत्वं खलस्य यद्वा तर्हीदं किमिति संहर्तव्यं तत्राह विभवोन्नहनस्येति तस्मादेवं करिष्यामीत्यत आह
अन्तःकलिमिति शान्तिमुपशममुपैमि वर्त्तमानसामीप्ये वर्त्तमानवद्वा उपैष्यामि तदनन्तरं स्वधामैवे-
कं वा खमुपैष्यामीत्यर्थः मनसि विधायमायाप्रपञ्चं विधाय विस्तार्य वेणुस्तम्बस्य वेणुकाण्डस्य वह्नि-
मिवेति तत्रैवं च कारेस्यर्थः तदेव प्रपञ्चेन प्रकटीकरोति अत्र शान्तिमिति वा पाठः एवं व्यवसित इत्यादिनाके

भा०ए०
टी०
३

ईश्वरेच्छयोत्थितं ब्रह्मशापं निमित्तं कृत्वा वक्तुमाह कर्माणीति कर्माण्याहृता: कर्माणि कृत्वा निसृष्टा मुनय:
पिंडारकं समगच्छन्नित्यर्थ: निसृष्टा: प्रस्थापिता: पूर्वोक्तामुदारकीर्तिं च वितन्वन् कर्माणि विशिनष्टि पुण्यानि
वहानीत्यादिभिस्त्रिभि: पदै: कानिचिदश्वमेधादीनि कर्माणि पुण्यमेव जनयंति पुत्रोपलालनादीनि तु तत्काल
सुखमेव कुर्वंति प्रायश्चित्तादीनि तु पापमेवापहरंति एतानि सर्वसुखानीत्याह पुण्यनिवहानि कीर्तनादिना।

कर्माणि पुण्यनिवहानि सुमंगलानि गायज्जगत्कलिमलापहराणि कृत्वा कालात्म॥
नानिवसता यदुदेवगेहे पिंडारकं समगमन्मुनयो निसृष्टा: ११ विश्वामित्रोऽसित: कण्वो दु
र्वासा भृगुरंगिरा: कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादय: १२ क्रीडंतस्तानुपव्रज्य कुमारा य
दुनंदना: उपसंगृह्य पप्रच्छुरविनीता विनीतवत् १३ ते वेशयित्वा स्त्रीवेशै: सांबं जांबवतीसु
तं कृत्वोदरं च सुमहद्वस्त्राद्यैर्यदुनंदना: १४ एषा पृच्छति वो बाला अंतर्वत्न्यसितेक्षणा प्रष्टुं वि
लज्जती साक्षात्प्रब्रूतामोघदर्शना: १५ प्रसोष्यंती पुत्रकामा किंस्वित्संजनयिष्यति प्रब्रुवंतु महाभाग्या अ
स्माकं तोषहेतवे १६ ॥

पुण्यानि निवहंति प्रापयंतीति तथा सुमंगलानि अतिसुखात्मकानि गायतो जगत: कलिमलापहराणि कृत्वा मु।
निप्रस्थाने हेतु: कालात्मना संहारकरूपेण यदुदेवगेहे निवसता स्वकुलं संजिहीर्षतेत्यर्थ: पिंडारकं ततो नातिदूरं ती
र्थविशेषं ११ उपसंगृह्य पादग्रहणं कृत्वा १३ प्रश्नप्रकारमाह श्लोकद्वयेन १४ लज्जमाना स्वमुखेन न पृच्छति हे।
अमोघदर्शना विप्रा: एषा अंतर्वत्नी गर्भिणी वो युष्मान् साक्षात्प्रष्टुं विलज्जती लज्जमाना पृच्छति १५ प्रसोष्यंती आस

राम:॥
३

प्रलब्धा वंचिताः १७ तस्मिन्नुदरे अयस्मयं लोहमयं १८ मंदभाग्यैरस्माभिः किमेतत्कृतं नोऽस्मान् किं वदिष्यंतीति विह्वलिताः संतो मुसलमादाय गेहान्ययुः १९ राज्ञे उग्रसेनाय ननु श्रीकृष्णाय २१ सत्याहुकोऽपि यदुराजः वसुदेवसहो नउग्रसेनः श्रीकृष्णस्य मते स्थितःप्रास्यत् क्षिप्तवान् अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहं च प्रास्यत्। २२ तरलैस्तरंगैः एरकाः प्रसिद्धतृणविशेषाः अन्यैर्मत्स्यैः सह शल्यं शराग्रं २४ ज्ञात्वा सर्वार्थायेनसः ईश्वरोऽपि

एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप जनयिष्यति वो मंदा मुसलं कुलनाशनं १७ तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरं साम्बस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयं १८ किं कृतं मंदभाग्यैर्नः किं वदिष्यंति नो जनाः इति विह्वलिता गेहानादाय मुसलं ययुः १९ तच्चोपनीय सदसि परिम्लानमुखश्रियः राज्ञ आवेदयांचक्रुः सर्वयादवसन्निधौ २० श्रुत्वामोघं विप्रशापं दृष्ट्वा च मुसलं नृप विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः २१ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितं २२ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः २३ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् २४ भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत २५ तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरं साम्बस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयं २६ इति श्रीभा० एका० प्रथमोऽध्यायः १

शुक० गोविंदभुजगुप्तायां द्वारवत्यां कुरूद्वह अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः १ ॥

समर्थोऽपि सन् अन्यथा कर्तुं नैच्छत्किं तु अन्वमोदत यतः कालरूपी २५ इति श्रीभाग० भावार्थदीपिकायां एकादशस्कंधे प्रथमः १ दृष्टी येन निजा पत संवादेनाहनोरदः धर्मान्भागवतानस्मा वसुदेवाय वक्ष्यते १ अभीक्ष्णं पुनः पुनः नरवात्मीदि नवनारदस्य दशादि

यद्भजने मुक्तानामपीदृशी सौभाग्यसंपत्तं को नाम न भजेदित्याह को न्विति इंद्रियवानिति इंद्रियवत्त्वमात्रमेव यत्राधिकारिविशेषणमित्यर्थः सर्वतः सर्वेभ्योपि लोकेभ्यो मृत्युर्यस्य सः २ तथापि श्रीयात्रागमनं अपृष्टानामस्मत्स्वस्तये मंगलाय यथा चोत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां स्वस्तये तथा च भगवद्रूपस्य भगवतो यात्रा सर्वदेहिनां स्वस्तये इति लोके तावद्दृष्टं भूते हितेरताः ते भोपि भवादृशा अधिकाः इत्यतो देवेभ्योपि महतामुपमानमनुचितमित्या

को नु राजन्निंद्रियवान् गोविंदचरणांबुजं न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः २ तमेकदा तु देवर्षिं वसुदेवो गृहागतं अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ३ वसुदेव उवाच भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनां कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनां ४ भूतानां देवचरितं सुखाय च दुःखाय च सुखायैव हि साधूनां त्वादृशामच्यु॥ तात्मनां ५ भजंति ये यथा देवान्देवा अपि तथैव तान् छायेव कर्मसचिवाः साधवो दीनवत्सलाः ६ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव यच्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ७ अहं किल पुरानंतं प्रजार्थो भुवि मुक्तिदं अपूजयन्न मोक्षाय मोहितो देवमायया ८ ॥

ह ४ देवानां चरितमतिवृष्ट्यादिना भूतानां दुःखायापि भवति त्वादृशानां तु यथा सदृशानां अच्युत आत्मा येषां ते यत्किंचित्सुखं कुर्वंतोपि देवा भजनानुसारेण कुर्वंति न तथा साधव इत्याह भजंतीति ५ छायेव यथा पुरुषो यावद्भवति तावदेव तस्य छायापि तथा सचिवाः कर्मसहायाः ६ न देवं यद्यपि भवत आगमनमात्रेणैव कृतार्थाः तथापि पृच्छाम स्तवेति तत्र वेयैर्धर्मैः प्रसन्नो भगवान् तानित्यर्थः ननु त्वत्तोपि किमन्यो भगवत्प्रसादहेतुरस्ति

राम:॥

अतो यथा मुच्येमहि यथा नोऽस्मान् शाधि शिक्षय विचित्राणि यानि व्यसनानि यस्माद्यस्मिन्वा तस्मात्संसारात्तथा वि
श्वतः सर्वतो भयं यस्मिंस्तस्मात् भवद्भिर्हेतुभूतैः अंजसा अनायासेन अद्धा साक्षात् ९ हरेर्गुणैर्वर्णनीयत्वेन सं
स्मृतिं हरिं संस्मारितः इत्यर्थः प्रीतिमाविष्करोति सम्यगिति त्रिभिः १० एतत्सम्यक्पृच्छसि विश्वभावनान् सर्वशोधका
न् ११ आदृतः आस्तिक्येन गृहीतः अनुमोदितः परैः क्रियमाणः संस्तुतः सद्धर्मो भागवतो धर्मः हेदेववसुदेवस्य

यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् मुच्येमह्यंजसैवाद्धा तथा नः शाधि सुव्रत ९
श्रीशुक उवाच राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता प्रीतस्तमाह देवर्षिर्हरेः संस्मारि
तो गुणैः १० श्रीनारद उवाच सम्यगेतद्व्यवसितं भवता सात्वतर्षभ यत्पृच्छसे भागवता
न्धर्मांस्त्वं विश्वभावनान् ११ श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः सद्यः पुनाति
सद्धर्मो देवविश्वद्रुहोऽपि हि १२ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः स्मारितो भगवा
नद्य देवो नारायणो मम १३ अत्राप्युदाहरंतीममितिहासं पुरातनं आर्षभाणां च संवादं वि
देहस्य महात्मनः १४ प्रियव्रतो नाम सुतो मनोः स्वायंभुवस्य यः तस्याग्नीध्रस्ततो नाभिरृष
भस्तत्सुतः स्मृतः तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया अवतीर्णं सुतशतं तस्यासीद्वेदपारगं
१६ तेषां वै भरतो ज्येष्ठो नारायणपरायणः विख्यातं वर्षमेतद्यन्नाम्ना भारतमुत्तमम् १७

धेः यद्वा देवेभ्यो विश्वस्मै च द्रुह्यंतीति ये तानपि किंच त्वया महानुपकारः कृत इत्याह १२ पुण्ये श्रवणकीर्तने यस्य
सः १३ अत्रापि भगवद्धर्मनिर्णये विदेहस्य जनकस्य आर्षभाणां च संवादमितिहासं त्वं प्रति विविच्य कथयंति सप्तभिः १४ मो
क्षधर्मविवक्षया मोक्षधर्मप्रवर्तनेच्छया अवतीर्णं वासुदेवांशमित्यर्थः तस्य च वेदपारगं सुतशतमासीत् तेषाम
षभसुतानां मध्ये नव योगेश्वराणां चरितं वक्तुमितरेषां चरितमाह १६ तेषामिति एतदजनाभं नाम वर्षं यस्य नाम्ना

भा०ए०
१०
५

स्त्रीं त्यक्त्वेमां निर्गतः हरिमुपासीनः सेवमानः सन् तेषां नव नवद्वीपपतयः नवानां वर्षाणां आवर्त्तादिरूपखण्डानां पतयः। अस्य भारतवर्षस्यैकाशीतिसुताः कर्ममार्गप्रवर्त्तका ब्राह्मणा अभवन् नवेति १८ अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवन्तः आत्माभ्यासे कृतश्रमा इत्यर्थः वातरशना दिगम्बराः आत्मविद्याविशारदा निपुणाः १५ तेषां घोरमहस्सचरितमाह द्वाभ्यां २० त एत इति भगवद्रूपं विश्वं पश्यन्तः सदासदात्मकं स्थूलसूक्ष्मरूपं त

सभुक्तभोगांस्त्यक्त्वेमां निर्गतस्तपसा हरिं उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः १८ तेषां नव नवद्वीपपतयोऽस्य समन्ततः कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः १९ नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः श्रमणा वातरशना आत्मविद्याविशारदाः २० कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः २१ त एते भगवद्रूपं विश्वं सदसदात्मकं आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीं २१ अव्याहतेष्टगतयः सुरसिद्धसाध्यगंधर्वयक्षनरकिन्नरनागलोकान् मुक्ताश्चरंति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामं २२ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया वितायमानमृषिभिरजनाभे महात्मनः २३ तान्दृष्ट्वा सूर्यसंकाशान्महाभागवतान्नृप यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे २४ विदेहस्तानभिप्रेत्य नारायणपरायणान् प्रीतः संपूजयांचक्रे आसनस्थान्यथार्हतः २५ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः २६

द्रूपं आत्मनोऽव्यतिरेकेण पश्यन्तः २१ अ। व्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते मुक्ताः अनासक्ताः २२ महात्मनो निमेर्वितायमानमनुष्ठीयमान मजनाभे भारतवर्षे २३ यजमानो निमिः अग्नयः आहवनीयादयः विप्रा ऋत्विगादयः २४ अभिप्रेत्य ज्ञात्वा स्वरुचा स्वरूपे

राम:।
५

ननु भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राह विष्णोरिति विष्णुभक्ताः सर्वत्र लोकपावनार्थं पर्यटंतीत्यर्थः मयाद्यु
र्लभं लब्धं महाभाग्यमित्याह २७ दुर्लभेति बहवो देहा भवंति तेषां च नरदेहिनो जीवास्तेषां क्षणभंगुरोपि मानुषदेहो दुर्लभः
परमपुरुषार्थसाधनत्वात् वैकुंठः प्रियो येषां ते वैकुंठस्य वा प्रियास्तेषां दर्शनं २८ हे अनघा निरवद्याः भवतो युष्मानात्यंति
कं क्षेमं पृच्छामः यतः क्षणार्धकालभवोपि सत्संगः शेवधिर्निधिः निधिलाभे यथानंदो भवति तथात्र परमानंद इत्य
र्थः २९ तदर्थं च भागवतान्धर्मान्ब्रूत यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति कथंभूतान् यैर्धर्मैः प्रपन्नाय

विदेह उवाच मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः विष्णोर्भूतानि लोकानां पावनानि चरंति हि २७ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनं २८ अत आत्यंतिकं क्षेमं पृच्छामो भवतोऽनघाः संसारेऽस्मिन् क्षणार्धोऽपि सत्संगः शेवधिर्नृणां २९ धर्मान्भागवतान्ब्रूत यदि नः श्रुतये क्षमं यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ३० नारद उवाच एवं ते निमिना पृष्टा वसुदेव महत्तमाः प्रतिपूज्याब्रुवन्प्रीताः ससदस्यर्त्विजं नृपं ३१ कविरुवाच मन्येऽकुतश्चिद्भयमच्युतस्य पादांबुजोपासनमत्र नित्यं उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ३२ ॥

भक्तायाजो हरिः आत्मानमपि दास्यति
ददातीति तान् ब्रूत। ३० सह सदस्यैः ऋत्विग्भिश्च वर्तमानं तं च भगवद्धर्मश्रवणपरा भवन्त्वित्यर्थः भगवद्
भक्तद्भक्तमायोत्तरणानि च ब्रह्मकर्मावतारेहाः भक्तप्राप्यपुरुषार्थमात्र ज्ञातुं क्रमेण कृतवान्नव प्रश्नान्नि।
मिनृपः एकैकस्योत्तरं प्रोचुः कविमुख्या मुनीश्वराः प्रथममात्यंतिकं क्षेमं कथयति ३१ मन्य इति कुतश्चिदपि भयं यस्मा
त्तमकुतश्चिद्भयमच्युतस्यात्र संसारेऽसदात्मभावात् असति देहादावात्मभावनातो नित्यं सदा उद्विग्नबुद्धेः।

मन्वादिमुखेनवर्णाश्रमादिधर्मानुक्त्वातिरहस्यत्वात् स्वमुखेनैवभगवताविदुषामपिपुंसां अञ्जःसुखेनैवात्म।
लब्धयेयेवैउक्ताउपायाःतान्भागवतान्धर्मान्विद्धि अञ्जःपदेनोक्तंसुकरत्वंविवृणोति ३३ यानिति यानास्थाया
श्रित्ययोगादिष्विवनप्रमाद्येतविघ्नैर्नविहन्येत किंचनिमील्यनेत्रेधावन्नपि इहएषुभागवतधर्मेषुनस्खलेत् निमी
लनंनामाज्ञानं यथाहुः श्रुतिस्मृतीउभेनेत्रेविप्राणांपरिकीर्तिते एकेनविकलःकाणोद्वाभ्यामन्धःप्रकीर्तितः इत्यज्ञा
त्वापीत्यर्थः तथापदन्यासस्थानमतिक्रम्यातिशीघ्रमनुष्ठानस्यामतिक्रम्यशीघ्रंपरतःपदन्यासेनगतिर्धावनं तद्व
दत्रापिकिंचित्किंचिदतिक्रम्यातिशीघ्रमनुष्ठानंधावनं तथानुतिष्ठन्नपिनस्खलेत्नप्रत्यवायीस्यात् तथानपते
न्फलाद्भ्रश्येत् ब्राह्मणादीनामुक्तान्धर्मान्कांश्चिदकुर्वाणोभागवतान्धर्मान्श्रवणकीर्तनादीन्कुर्वाणःततस्त

यैवैभगवताप्रोक्ताउपायाह्यात्मलब्धये अञ्जःपुंसामविदुषांविद्धिभागवतान्हितान् ३३
यानास्थायनरोराजन्नप्रमाद्येतकर्हिचित् धावन्निमील्यवानेत्रेनस्खलेन्नपतेदिह ३४
कायेनवाचामनसेन्द्रियैर्वाबुद्ध्यात्मनावानुसृतस्वभावात् करोतियद्यत्सकलंपरस्मै
नारायणायेतिसमर्पयेत्तत् ३५ ॥

लंप्राप्नुयादितिभावः ३४ ननुतएवभागवताधर्माःईश्वरार्पितानि।
सर्वाणिकर्माणीत्याशयेनाह कायेनेति आत्मनाचित्तेनाहंकारेणवाऽनुसृतोयःस्वभावःतस्मादित्यर्थः नकेवलंविधि
तःकृतमेवेतिनियमःस्वभावानुसारिलौकिकमपीति तथाचभगवद्गीतासु यत्करोषियदश्नासियज्जुहोषिददासि
यत् यत्तपस्यसिकौन्तेयतत्कुरुष्वमदर्पणमिति यद्वाननुकायादीनामेवकर्मनात्मनइत्याशंक्याह अध्यासेना
नुसृताद्ब्राह्मणादिस्वभावाद्यद्यत्करोतीत्यर्थः तत्सकलंपरस्मैपरमेश्वरायनारायणायेतिसमर्पयेत् तथाचसतिस
कलमपिकर्मभागवतोधर्मोभवतीतिभावः ननुकिमेवंपरमेश्वरभजनेनाज्ञानकल्पितभयस्यज्ञानैकनिवर्त्यत्वा

भयमिति यतो भयं तन्मायया भवेत्‌ तत एव बुधो बुद्धिमान्‌ तमेव भजेत्‌ ननु भयं देहाद्यभिनिवेशतो भवति स च देहेऽहंकार तः स च स्वरूपास्मरणात्‌ किमत्र तस्य माया करोति अत आह ईशादपेतस्येति ईशाद्विमुखस्य तन्मायया स्मृतिर्भगवतः स्वरूपास्फूर्तिः ततो विपर्ययोऽस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति एवं हि प्रसिद्धं लोकिकेष्वपि मायामुक्तं भगवता दैवी ह्येषा गुणमयी मम माया दुरत्यया मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते एकया अव्यभिचारिण्या भजेत्‌ किं च गुरुर्देवता त्मा गुरुरेव देवता ईश्वरः आत्मा प्रेष्ठश्च यस्य तस्य तया हृषः सन्नित्यर्थः ननु विषयविक्षिप्तस्य कुतोऽव्यभिचारिणी

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः तन्माययातो बुध आभजेत्तं भ त्यैकयेशं गुरुदेवतात्मा ३६ अविद्यमानोऽप्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथौ

विकल्पकं यथा तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात्‌ ३७ शृण्वन्सुभद्राणि रथा ङ्गपाणेर्जन्मानि कर्माणि च यानि लोके गीतानि नामानि तदर्थकानि गायन्विलज्जो विच रेदसंगः ३८ ॥

भक्तिः संभवति कुतस्तरामभयं अत्र नतावद्द्वयो नाम वास्तवोऽस्ति किं तु मनोविलासमा मात्रं अतो मनोनियमेन भजनादभयं स्यादित्यत आह ३६ अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुः पुंसः धिया मन सा स्वप्नमनोरथयोरित्यर्थः तत्तस्मात्कर्माणि संकल्पयति विकल्पयति विकल्पयति च यन्मनस्तन्निरुध्यान्निरुद्ध त्य ततश्चैकया भक्त्या भजनादभयं स्यादित्यर्थः एतदप्यनाश क्यसुगमं मार्गमाह शृण्वन्निति तदर्थकानि तानि जन्मानि कर्माणि च अर्थो येषां तानि एतानि अन्यपि साकल्येन ज्ञातुमशक्यानीत्यत्र आह यानि लोके सुप्रसि द्धानि तानि शृण्वन्गायन्‌ विचरेत्‌ असंगो निस्पृहः एवं च भजतः संप्राप्तप्रेमलक्षणभक्तियोगस्य सं सारधर्मातीतां गतिमाह एवंव्रत इति ३८ ॥ ॥ ॥

भा॰ग॰
११॰
७

एवंव्रतं व्रतं यस्य सः स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेम यस्य अत एव द्रुतचित्तः शिथिलहृदयः कदाचिद्धन्त पराजितं भगवन्तं माकलय्योच्चैर्हसति एतावन्तं कालमुपेक्षितोऽस्मीति रोदिति अप्राप्त्या कदा द्रक्ष्यामीति क्रोशति हे हरे मामनुगृहाणेति अतिहर्षेण गायति जितं जितमिति नृत्यति किं हासिकवत्परात्मकाशयितुं नो मत्तवत् ग्रहगृहीतवत् लोकबाह्यो विवशः किंच ३९ सत्त्वानि भूतान्याकाशादि यत्किंच भूतमात्रं हरेः शरीरमिति मत्वा प्रणमेत् संभावनायां लिङ् नन्वियमारूढयोगिनामपि बहुजन्मभिः सुदुर्लभा गतिः कथं नामकीर्तनमात्रेण एकस्मिन्नेव जन्मनि भवे।

एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ३९ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ४० भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासं ४१ इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति सम्यक् ४२ ॥

दितिसदृष्टान्तमाह भक्तिरिति ४० प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः तया निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिः इत्येष त्रिकः एककालो भजनसमकाल एव स्यात् यथाश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः उपलक्षणमेतत् प्रतिसिक्थमपि यथा स्युस्तद्वत् एवमेकैकस्मिन्नपि भजने किंचित्किंचित्प्रेमादिके जायमाने अनुवृत्त्या निरंतरं भजतः परं प्रेमादि जायते बहुग्रासभोजिन इव परमतुष्ट्यादि ततश्च भगवत्प्रसादेन कृतार्थः।

राम:
७

यद्धर्मः यस्मिन् धर्मे परिनिष्ठितः याहृशो यत्स्वभावश्च यथा चरति वर्त्तते कुते वा यैश्च लिंगैर्भगवतः प्रियो भवति य।
४४ अतः परस्य उत्तरमाह त्रयेण ४३ आत्मनः स्वस्य सर्वभूतेषु ब्रह्मभावेन समत्वं यः पश्येत् तथा ब्रह्मस्वरूपे आत्म।
न्यधिष्ठाने भूतानि च यः पश्येत् यद्वा आत्मन तत्वाहि हृत्तस्मात् आत्मा हि परमो हरिरिति तन्त्रोक्ते आत्मनो हरेः सर्वभूते
षु मशकादिष्वपि नियंतृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येत् तस्य तनुतारतम्यं यथात्मनि हि
रावेव भूतानि च पश्येत् ४५ कथंभूते भगवति अप्रच्युतैश्वर्यादिरूपेण पुनर्जडमलिनभूताश्रयत्वेन जाड्यादि
प्रसक्तेः ऐश्वर्यादिप्रच्युतिं पश्येत् स सर्वो[ऽ]त्र परिकरीं भगवत तत्वं पश्यन् भागवतोत्तमः ॥ तत्पथः प्रेम च मैत्री कृपा च तद्द्वे

राजोवाच अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणां यथाचरति यद्ब्रूते यैर्लिंगैर्भगवत्प्रि
यः ४३ हरिरुवाच सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः भूतानि भगवत्यात्मन्येष भाग
वतोत्तमः ४४ ईश्वरे तदधीनेषु द्विषत्सु च प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ४५ अ
र्चायामेव हरये पूजां यः श्रद्धयेहते न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः गृहीत्वापी
न्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ४७ देहेन्द्रियप्राण
मनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः

।लिशे।बु२

त्वा च तान् ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतो ज्ञेयः एवंभूतस्य भेददर्शनात् ४५ अर्चायां प्रतिमायां पू।
जामीहते करोति न तद्भक्तेषु च भूतेषु इतरां न करोति प्राकृतः प्रक्रान्तिप्रारंभः अधुनैव प्रारब्धभक्तिरित्यर्थः शनैरुत्तमो भवि
ष्यतीत्यर्थः ४६ उत्तमस्य लिंगः श्लोकैरष्टाभिः तत्रादौ उत्तमभागवतस्य च लक्षणान्याह श्रीवासुदेवाविष्टचित्ततया इन्द्रि
यैरर्थान् गृहीत्वापि अत्यपि श्रावयस्तां न द्वेष्टि न हृष्यति किंच ४७ देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्या
ऽविमुह्यमानः स भागवतप्रधानः तत्र च देहस्य जन्माप्ययौ प्राणस्य क्षुत् मनसो भयं बुद्धेस्तर्षः इन्द्रियाणां कृच्छ्रं।

कामश्च कर्माणि च बीजानि च मनसस्तेषां वासुदेव एको निलय आश्रयो यस्य सः । ततः गृहीत्वापीत्यादिश्लो=
कत्रयेण देहहर्षमोहकामादिरहितत्वरतीनि यथाचरतीत्यस्योत्तरमुक्तं येर्लिंगेर्भगवत्प्रिय इत्यस्योत्तरमाह नय-
स्येति ४९ जन्मकुलं कर्म तपआदि जातयोनुलोमप्रतिलोमजाः मूर्धावसिक्तादयः अस्मिन्देहेहंकाररहितः सन् ।
कुलकर्मादिलिंगैर्हरेः प्रियो भवतीत्यर्थः ५० वित्तेषु स्वीयपरकीयमिति आत्मनि च स्वः पर इति किंच त्रिभुवनेति ५१

नकामकर्मबीजानां यस्य चेतसि संभवः वासुदेवैकनिलयः सवैभागवतोत्तमः ४९ न
यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः सज्जतेस्मिन्नहंभावो देहेवैसहरेःप्रियः ५०
नयस्यस्वः परइतिवित्तेष्वात्मनिवाभिदा सर्वभूतहितः शांतः सवैभागवतोत्तमः ५१
त्रिभुवनविभवहेतवेप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् नचलतिभगवत्प
दारविंदाल्लवनिमिषार्धमपिसवैष्णवाग्र्यः ५२ ॥

त्रिभुवनविभवहेतवेपि त्रैलोक्यराज्यार्थमपि लवार्धमपि निमिषार्धमपि भगवत्पदारविंदभजनान्न चलति ।
स वैष्णवाग्र्यः भागवतोत्तमः ननु लवार्धमात्रभजनेऽकृते चेत्तावानेव लाभो भवेत्तत्कृतो न चलेत्तत्राह अकुंठस्मृ-
तिः भगवत्पादतोन्यत्सारं नास्तीत्येवंरूपा अकुंठा अनुपगता स्मृतिर्यस्य सः भगवत्पदारविंदादन्यत्सारं नास्ती-
ति कुतः अत आह अजिते हरावेवात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् किंतु केवलं विमृग्यात् तदपेक्षया
सर्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थः अपि च विषयाभिसंधिना चलनं कामेनाभिसंतापे सति भवेत्स तु का-

आद्यः पुरुषो यथा यथावत्तथा भूतानामात्मकारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज । तथा भगवताऽपि चरमश्लोकपादस्य प्रतिश्लोकमनुषंगः । किमर्थं ससर्ज स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते यः उपाध्युपहितः स्वमात्रा तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धये यद्वा तत्त्वेन भूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये च मोक्षाय चेति एतदुक्तं वेदस्तुतौ बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय चेति ३ एवं जीवोपकारार्थं पंचधातुभिर्महाभूतैः सृष्टानि भूतानि अन्तर्यामिरूपेण प्र॰

श्रीभगवानुवाच एभिर्भूतानि भूतात्मा महाभूतैर्महीपते ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ३ एवं सृष्टानि भूतानि प्रविष्टः पंचधातुभिः एकधा दशधात्मानं विभजञ्जुषते गुणान् ४ गुणैर्गुणान्स भुंजान आत्मप्रद्योतितैः प्रभुः मन्यमान इदं सृष्टमात्मानमिह सज्जते ५ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरं ६ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान् आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ७ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकं अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ८ ॥

विष्टः एकधा मनसा दशधा बाह्येन्द्रियरूपेणात्मानं विभजन्गुणांस्तत्तद्विषयाञ्जुषते । जोषयतीत्यर्थः यद्वा तमात्मानं प्रति गुणान्विभजञ्जुषते प्रीयते इत्यर्थः ४ सजीव आत्मना तर्यामिना प्रद्योतितैर्गुणैरिन्द्रियैर्गुणान्विषयान्भुंजान इदं शरीरं सृष्टं आत्मानमहमेवमन्यमान्यः इह शरीरादौ सज्जते ५ कर्मभिः । कर्मेन्द्रियैः सनिमित्तानि सवासनानि कर्माणि कुर्वन् तत्तत्पूर्वकर्मफलं च गृह्णन्नयं देहभृत् भ्रमतीह संसारे नमुच्य ते [illegible]खेतरं सुखदुःखात्मकं कर्मफलं विद्यतं कालं भ्रमतीत्याह इत्थं बह्वभद्राणि वहंतीति तथा ताः सर्गप्र

तस्मिन्काले उपचित उष्णो यस्यासौ उष्णांशुरर्कः अथवा हि तेन उपचितमुष्णत्वं यस्य सः ९ ऊर्ध्वशिखः ऊर्ध्वज्वालः विश्वक् ईरितः १०
संवर्तकः प्रलयकर्ता धाराभिर्जलविंदुभिर्हस्तिहस्ताभिस्तत्प्रमाणाभिरित्यर्थः ११ ततउपाधिलयाद्वैराजः पुरुषोऽव्यक्तं
कारणं प्रविशति ननु ब्रह्मणा सह तेन सर्वे संप्राप्ते प्रतिसंचरे परस्यान्ते कृतात्मानः प्रविशंति परं पदमिति श्रु
त्या वरं धिकारमवस्थितिरधिकारिकाणामिति न्यायाच्च वैराजशब्दाभिधेयस्य च ब्रह्मणः परमभागवतत्वा
न्मोक्षणावसं गच्छतेनान्येषामिव कारणमात्रप्रवेशः सत्यं अयमधिकारिसत्यलोकगतानां मध्यमक्रमेनामाच्छ।

शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ९
पातालतलमारभ्य संकर्षणमुखानलः दहन्नूर्ध्वशिखो विष्वक् वर्द्धते वायुनेरितः १० सं
वर्तको मेघगणो वर्षति स्म शतं समाः धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ११ त
तो विराजमुत्सृज्य वैराजः पुरुषो नृप अव्यक्तं विशते सूक्ष्मं निरिंधन इवानलः १२ वा
युनाहृतगंधा भूः सलिलत्वाय कल्पते सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते १३

कं २

तिष्ठन् वा कारणस्थत्वेव ब्रह्मणोऽपि प्रकृतौ लयः पुनरस्यातिस्फूर्तिमात्रे तद्रोलेभ्यस्तु च नायेव मुक्तिमिति
विरोधः यद्वा केनापि प्रमाणेन न व्यज्यते तेन तथापि लेशत्वव्यक्तं ब्रह्मैव तत्प्रवेशेन मोक्षणवाक्यमित्यदृष्ट
र्थः १२ एवं विराजो लयमुक्त्वा तत्कारणानां महदादीनामपि तेनानुप्रातिलोम्येन लयमाह वायुनेति वा
युर्हि गंधरसहारित्वप्रसिद्धः संवर्तकेन वायुना हृतगंधा अतएव गंधस्य व्यावर्तकस्य गतत्वात्सलिलत्वा
यकल्पते सलिले लीयत इत्यर्थः तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् १३ ॥ ॥

तमसस्तद्रूपतिरस्कारित्वं प्रसिद्धं सावर्ण्ये केन तमसा अवकाशेन आकाशेन स्वकारणेन कालात्मना
शब्दस्यापि कालत एव नाशः प्रसिद्धः तद्रूपेणात्मनाऽश्वरेण आत्मनि तामसाहंकारे १४ इंद्रियाणां बु
द्धिमनसां राजसाहंकारे मनो वैकारिकैर्देवैः सह सात्विकाहंकारे एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितः अहं
कारः आत्मनि महति स च प्रकृतावतिष्ठते १५ त्रिवर्णा त्रिगुणा माया अवर्णमीश्वरज्ञानं तल्लिंगरूपा
यत्र वर्णा त्वं छइपति किं भूय इति १६ एवमनुकंपितस्तल्लिंगरूपामेव पृच्छति यथैतामिति यद्यपि त

हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते का
लात्मना हृतगुणं नभ आत्मनि लीयते १४ इंद्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप
प्रविशंति ह्यहंकारं स्वगुणैरहमात्मनि १५ एषा माया भगवतः सर्गस्थित्यंतकारि
णी त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि १६ राजोवाच यथैतामैश्वरीं
मायां दुस्तरामकृतात्मभिः तरंत्यंजः स्थूलधियो महर्ष इदमुच्यतां १७ प्रबुद्ध उवाच
कर्माण्यारभमाणानां दुःखहत्यै सुखाय च पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणां

न्मायया तो बुध आभजेतमिति भक्तिस्तत्तारकत्वेनोक्तैव तथापि किं भक्तिरेव अन्योपि वा तरणोपायोस्ति।
तित्वात्पुनः प्रश्नः अकृतात्मभिः अवशीकृतांतःकरणैः स्थूलधियः स्थूलशरीरे अहंधीर्येषां ते।
१७ भक्तिव्यतिरेकेणान्यस्त्वनुपाय इति अभिप्रेत्य भक्तिमेव ससाधनां निरूपयति तत्र प्रथमं वैरा
ग्यद्वारमनुरूपयतिमाह चतुर्भिः कर्माणीति दुःखहत्यै दुःखप्रतीकाराय पाकविपर्यासं फलवैपरीत्यं
मिथुनीचारिणां मिथुनीभूय प्रवर्तमानानां १८ ॥ रामः रामः रामः

कर्मभिः साधिता अपि विनाशित्वेन सुखहेतवः इति च पश्येदित्याह नित्यार्त्तिदेनेति आत्मनः स्वस्य मृत्युरूपे णाचलैरनित्यैरपार्थिभिश्च १९ एवं लोकं परमिति कर्मनिर्मितत्वान्नश्वरं तथा च श्रुतिः तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते इति किंच वर्तमानसमयेऽपि दुःखयुक्तं पश्येदित्याह सतुल्यातिशयध्वंसं सह तुल्येन अतिशयेन ध्वंसेन च वर्तमानं मण्डलस्तुल्यस्पर्द्धा अतिशये असूया ध्वंसालोचने भयादिकं चापरिहार्यमित्यर्थः यथा खंडमंडलपतीनां मिथः स्पर्द्धादि तद्वत् २० उत्तमं श्रे

नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः १९ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितं सतुल्यातिशयध्वंसं यथा मंडलवर्तिनां २० तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमं शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयं २१ तत्र भागवतान्धर्मान् शिक्षेद्गुर्वात्मदैवतः अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः २२ सर्वतो मनसोऽसंगमादौ संगं च साधुषु दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितं २३ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवं ब्रह्मचर्यमहिंसां च समत्वं द्वंद्वसंज्ञयोः २४ ॥

यो ज्ञातुमिच्छुः शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञं अन्यथा संशयनिरासकत्वायोगात् परे च ब्रह्मण्यपरोक्षानुभवेन निष्णातं अन्यथा संबोधसंचारायोगात् परब्रह्मनिष्णाततत्वद्योतकमाह उपशमाश्रयमिति २१ गुरुरेवात्मा दैवतं च यस्य सः अनुवृत्त्या सेवया यैर्धर्मैर्वस्तुत आत्मा आत्मप्रदश्च तेषां आत्मानं यथा बलिप्रभृतीनां २२ यथोचितमिति हीनेषु दयां समेषु मैत्रीं उत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः २३ शौचं बाह्यं मृज्जलादिभिः आभ्यंतरं चादेहमनादिशोधनेन तपः स्वधर्माचरणं तितिक्षां द्वंद्वसहनं मौनं वाचाऽनुच्चारणं स्वाध्यायं अधिकारानुरूपं वेदपाठादिकं आर्जवं स्वच्छलता ब्रह्मचर्यं यथाश्रमं गृहस्थस्य ऋतुस्वदाराभि

११

आत्मेश्वरान्वीक्षां सच्चिद्रूपेणात्मेक्षां नियंतृरूपेणेश्वरान्वीक्षां च । कैवल्यमेकान्तशीलत्वं अनिकेततां गृ॥ = हाद्यभिमानराहित्यं विविक्तचीरवसनं विजनः नपतितानां वस्त्रखंडानां गुच्छानां वा वल्कलानां परिधानं २४ भागवते भगवत्प्रतिपादके अन्यत्र शास्त्रांतरेष्वप्यनिंदां मनसः प्राणायामैः वाचो मौनेन कर्मणोऽनीहा। या दंडं सत्यं यथार्थभाषणं शमदमौ अंतःकरणबाह्येंद्रियनिग्रहौ २६ हरेर्जन्मकर्मगुणानां श्रवणादिभिः तदर्थे हर्युद्देशेन सर्वकर्मविशेषतश्च यज्ञादि यत्तत्तत्तदर्थे शिक्षेत २७ इष्टं दत्तमित्यादयो भावे नि

सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् विविक्तचीरवसनं संतोषं येन केनचित् २५ =
श्रद्धां भागवते शास्त्रेऽनिंदामन्यत्र चापि हि मनोवाक्कर्मदंडं च सत्यं शमदमावपि २६ श्र
वणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितं २७ इ

स्पर्श ३ ष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियं दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनं २८ एवं कृष्णा
त्मनाथेषु मनुष्येषु च सौहृदं परिचर्यां चोभयत्र महत्सु नृषु साधुषु २९ परस्परानुकथ
नं पावनं भगवद्यशः मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ३० ॥ ॥ =

वृत्तं सदाचारः आत्मनः प्रियं गंधपुष्पादि दारादीनप्यात्मस्यपरमेश्वराय निवेदनं तत्सेवकतया। = सम समर्पणं यत्तच्छिक्षेत २८ कृष्णएवात्मा नाथश्च येषां कृष्ण आत्मनो जीवस्य नाथो येषामिति वा तेषु उभयत्र स्थावरे जंगमे च परिचर्यां विशेषतो नृषु तत्रापि साधुषु स्वधर्मशीलेषु ततोऽपि महत्सु श्रीभागवते षु २९ तेष्वन्यसहसंगस्य परस्पराकथनं भगवद्यशः तत्परस्परानुकथनं शिक्षेत यद्वा यशः प्रतीतत्वं सस्यं सि हरि परित्यागेन मिथो [illegible]ः रमणं याचनं तुष्टिः सुखं प्राच निवृत्तिः समस्तदुःखनिवृत्तिस्तां च शि रामः

१२

एवंवर्त्तमानानांपरमांनिष्ठामाह स्मरंतइतिद्वयेनभक्त्यासाधनभक्त्यासंजातयाप्रेमलक्षणयाभक्त्या ३१
अजंहरिंअनुशीलयंतितल्लीलाअभिनयंतिएवंपरमेत्यप्राप्यनिर्वृताःसंतस्तूष्णींभवंति ३२ उपसंहर
तिइतीतिभागवतधर्मोत्पन्नयाभक्त्या नारायणपरोमायांतरतीत्युक्तेपृच्छति ३३ नारायणाभिधानस्ये
ति निष्ठांस्वरूपंअयंभावः ब्रह्मैवतावन्नारायणइतिभगवानितिपरमात्मेतिचोच्यते तदुक्तंवदंति तत्तत्त्व
विदस्तत्त्वंयज्ज्ञानमद्वयंब्रह्मेतिपरमात्मेति भगवानितिशब्द्यतइति तथानारायणोभगवानिति तदिदंविष्णु
माहितगृहीतमायोरुगुणःसर्गादावगुणःस्वतःइत्यादिषुतत्त्वकैर्मुनिभिःशास्त्रे निर्विशेषंतदेवब्रह्म उच्यते अत

स्मरंतःस्मारयंतश्चमिथोऽघौघहरंहरिं भक्त्यासंजातयाभक्त्याबिभ्रत्युत्पुलकांतनुं ३१ क
चिद्रुदंत्यच्युतचिंतयाक्वचिद्धसंतिनंदंतिवदंत्यलौकिकाः नृत्यंतिगायंत्यनुशीलयंत्यजंभवं
तितूष्णींपरमेत्यनिर्वृताः ३२ इतिभागवतान्धर्मान्शिक्षन्भक्त्यातदुत्थया नारायणपरो
मायामंजस्तरतिदुस्तरां ३३ राजोवाच नारायणाभिधानस्यब्रह्मणःपरमात्मनः निष्ठामर्ह
थनोवक्तुंयूयंहिब्रह्मवित्तमाः ३४ पिप्पलायनउवाच स्थित्युद्भवप्रलयहेतुरहेतुरस्ययत्स्वप्नजा
गरसुषुप्तिषुसद्बहिश्च देहेंद्रियासुहृदयानिचरंतियेनसंजीवितानितदवेहिपरंनरेंद्र ३५

स्तत्त्वाकारःपरिनिष्ठाशब्दइति ३४ अत्रोत्तरं स्थित्युद्भवेति अयमर्थः अस्यविश्वस्यस्थित्युद्भवप्रलयानां
हेतुःस्वयंचाहेतुःहेतुरहितःसनारायणइति परमेवतत्त्वमवेहि स्वप्नजागरसुषुप्तिषुसत् अनुवर्त्तमा
नंयत् बहिश्चतुरीयंत्रिषुसंततमिति बहिश्चसमाध्यादौयत्तत्तद्रूपमितिपरमेवतत्त्वमवेहि देहेंद्रिय
प्राणमनांसियेनसंजीवितानिसंतिचरंतिस्वस्वकार्येषुप्रवर्त्तंते तत्परमात्मेतिपरमेवतत्त्वमवेहि एवंत

हो ३

अवेहित्यनेन विषयत्वप्राप्तं निषेधयति नैतदिति एतत्परं तत्त्वं मनो न विषयीकरोति वागुत वागपि वक्तृत्वमा
त्मबुद्धिस्थप्राणाख्यक्रियाशक्त्या न प्राप्नोति अन्यानि चेन्द्रियाणि यथानलस्याः स्वाश्रयं ना अर्चिषो विस्फु
लिंगादयः न प्रकाशयन्ति न दहन्ति च तथा जडास्तु मन आदिकं तद्ध्वनिभज्यमानस्यात्मप्रकाशस्य च
तत्तद्वृत्तिप्रकाशस्य न तत्प्रकाशविषयत्वं प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो मन
सो ये मनो विदुरिति तथा यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतेः ननु तच्चोपनिषद्गुह्यं

नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः शब्दोऽपि
बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ३६

च्छामिति श्रुतेः शब्दगोचरत्वं प्रतीयते तत्राह शब्दोऽपीति शब्दोऽप्यात्ममूलं आत्मनिष्ठप्रमाणं सत् अर्थोक्तं।
अर्थादुक्तं यथा भवति तथाह न साक्षात्कुतः बोधकनिषेधतया स्वस्यैव बोधकस्य निषेधरूपत्वात् यतो वा
चो निवर्तन्ते अप्राप्य मनसा सह यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि यन्मनो न मनुते न चक्षु
षा पश्यति कर्णेनेत्यादिश्रुतेः ननु तर्हि नैवाह श्रुतिः किमिदमुच्यते अर्थोक्तमाहेति तत्राह यदृते इति।
अर्थात् आदेशो नेति अस्थूलमनणु यतो वाचो निवर्तन्ते यद्वाचानभ्युदितमित्यादिनिषेधस्य यत् अ
वधिभूतं ब्रह्म ऋते विना सिद्धिर्नास्ति सर्वस्य निषेधस्य सावधित्वात् ३६ ॥ ॥ ॥

ननु तर्हि प्रमाणाविषयत्वान्नास्त्येव ब्रह्मेति प्रसज्येतेत्यत आह सत्वमिति सत्स्थूलं कार्यं असत्सूक्ष्मं कारणं तत्सर्वं ब्रह्मै
व भाति कुतः यद्यस्मात्तयोः सदसतोः परं कारणं कार्यकारणाद्भिन्नं न भवति ननु कथमेकं बहुविधस्य कारणं तत्राह।
उरुशक्ति अनेकशक्तिमत् उरुर्महती मायालक्षणा शक्तिर्यस्य तदिति वा बहुधाभानमेव दर्शयति आदौ यदेकं ब्रह्म
तदेव सत्वरजस्तमः इति त्रिवृत् प्रधानं प्रवदंति ततः क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महानिति तदेव प्रवदंति ततः अहमि
ति जीवं जीवोपाधिमहंकारं च तदेव प्रवदंति ततश्च ज्ञानक्रियार्थफलरूपतया ज्ञानशब्देन देवताः क्रिया इंद्रियाणि अ
र्था विषयाः फलं तत्प्रकाशः सुखादि वा तद्रूपतया ब्रह्मैव भाति नहि सर्वरूपेण स्वतोभासमानस्य ब्रह्मणः स्वसिद्धौ प्र

सत्वंरजस्तमइतित्रिवृदेकमादौ सूत्रंमहानहमितिप्रवदंतिजीवं ज्ञानक्रियार्थफलरूपतयोरुशक्तिः
ब्रह्मैवभातिसदसच्चतयोःपरंयत् ३७ नात्माजजाननमरिष्यतिनैधतेसौनक्षीयतेसवनवि
द्व्यभिचारिणांहि सर्वत्रशश्वदनपाय्युपलब्धिमात्रं प्राणोयथेंद्रियबलेनविकल्पितंसत् ३८

माणापेक्षेतिभावः ३७ ननु सर्वात्मकं चेद्ब्रह्म तर्हि सर्वस्य कार्यस्य जन्मादिविकारवत्वाद्ब्रह्मणोऽपि तत्प्रसंगः स्यादत
आह नात्मेति आत्मा ब्रह्म न जजान न जातः जन्माभावादेव तदनंतरास्तितालक्षणोऽपि विकारो नास्ति नैधते न वर्द्धते वृ
द्ध्यभावादेव विपरिणामोऽपि निरस्तः कुतः हि यस्मात् व्यभिचारिणां आगमापायिनां बालयुवादिदेहानां सवनवित्
तत्तत्कालद्रष्टा नन्ववस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः निरवस्थः कोऽसावात्मा अत आह उपलब्धिमात्रमि
ति नन्वायातं तर्हि तस्य क्षणिकत्वं नेत्याह सर्वत्रेति सर्वत्र देशे शश्वत्सर्वदा अनपायि अनुवर्तमानं ननु नीलज्ञानं जा
तं पीतज्ञानं नष्टमिति प्रतीतेर्ज्ञानस्यानपायित्वं अत आह इंद्रियबलेनेति सदेव ज्ञानं इंद्रियबलेन विविधं क
ल्पितं नीलाद्याकारावृतं तदेव जायते नश्यति च न ज्ञानमिति भावः व्यभिचारित्वे व्यभिचारे दृष्टांतः प्राणो य

दृष्टांतः विद्यएवन्निर्द्दियादिलयेननिर्विकारात्मोपलब्धिंदर्शयति अंडेष्विति येष्वंडजजरायुजेषुतरुषुउद्भिज्जेषु।
अविनिश्चितेषुस्वेदजेषुउपधावति अनुवर्त्तते एवंदृष्टांतेननिर्विकारत्वंप्रदर्श्यदार्ष्टांतिकोपदर्शयति कथंतर्हि
वात्मासविकारइवप्रतीयते यदायदाजागरे इंद्रियगणः यदाचस्वप्नेनतत्संस्कारवानहंकारः यदातुप्रसुप्तेनद
दातस्मिन्प्रसुप्ते इंद्रियगणोसन्नेलीयते अहमिव अहंकारेचसन्नेकूटस्थः निर्विकारएवात्माकृतः आशय।
म्ऋते लिंगशरीरमुपाधिंविनाविकारहेतोरुपाधेरभावादित्यर्थः नन्वहंकारपर्यंतस्यसर्वस्यलयेऽस्मृत्यमे।

अंडेषुपेशिषुतरुष्वविनिश्चितेषु प्राणोहिजीवमुपधावतितत्रतत्र सन्नेयदिंद्रिय
गणेहमिवप्रसुप्तेकूटस्थआशयमृतेतदनुस्मृतिर्नः ३९ ॥ रामः ॥

वाशेषेणतत्कथंतदाकूटस्थआत्मा अतआह तदनुस्मृतिर्नः तस्यविशेषज्ञानशून्यस्यसुखात्मनः सुषु
प्तिसाक्षिणःस्मृतिर्नोस्माकंभवति एतावंतंकालंसुखमहंसुप्तः नकिंचिद्वेदिषमिति अतोऽनुभूतस्यास्मरणा
दस्यैवसुषुप्तावात्मानुभवः विषयसंबंधाभावात्तस्यच इतिभावः तथाचश्रुतिः यद्वैतन्नपश्यतिपश्यन्वैतन्न
दृष्टव्यंनपश्यति नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइति ३९ ॥ ॥ ॥

ननु यदि सुषुप्तौ कूटस्थात्मानुभवो भवेत् कथं पुनरपि संसारः स्यात् अविद्यातत्संस्काराणां विद्यमानत्वादिति।
चेत् कस्तर्हि निवर्तकोनुभवो भवेत् अत आह यर्हीति विशेषणादि विहाय केवलमब्जनाभस्यैव चरणैषणया याउ
रुभक्तिः तया पुमान् चेतसो मलानि विधमेन्नाशयेत् चेत एव वा कर्तृत्वेन गतानि मलानि तया भक्त्या क्षालयेत् तदा त
स्मिन्विशुद्धे चेतसि साक्षादव्यवधानेनात्मतत्त्वमुपलभ्यते अमलयोर्दृशोः सत्योर्यथाप्रयत्नमेव सिद्धः सवितृप्रकाश
इति ४० भक्तेः कर्मयोगाधीनत्वात् पृच्छति कर्मयोगमिति नैष्कर्म्यं कर्मनिवृत्तिसाधनं ज्ञानं ४१ प्रश्नान्तर।

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि तस्मिन्विशुद्ध उपलभ्यत
आत्मतत्त्वं साक्षाद्यथामलदृशोः सवितृप्रकाशः ४० राजोवाच कर्मयोगं वदत नः पुरुषो
येन संस्कृतः विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परं ४१ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितु    पि २
रन्तिके नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यतां ४२ आविर्होत्र उवाच कर्माकर्म वि
कर्मेति वेदवादो न लौकिकः वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ४३ ॥

माह एवमिति प्रश्नं पूर्वमपृच्छं पितुः इक्ष्वाकोर्ब्रह्मपुत्राः सनकादयः सर्वज्ञा अपि नाब्रुवन् ४२ गूढत्व
द्योतनाय प्रथमं द्वितीयप्रश्नोत्तरमाह कर्मेति कर्म विहितं अकर्म तद्विपरीतं निषिद्धं विकर्म विगतं कर्म वि
हिताकरणं एतत्त्रयं वेदवादो वेदैकगम्यं न लौकिकः वेदस्य ईश्वरात्मत्वात् ईश्वरादुद्भूतत्वात् अपौरुषे
यत्वादित्यर्थः पौरुषेयवाक्यैर्हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यं अपौरुषेये तु केवलं वाक्यपौर्वापर्येणैव तात्पर्या
वधारणं तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यन्तीति किमुतान्ये अतस्ते तदा बालत्वान्नैवाब्रुवन्निति ४३

दुर्ज्ञेयं वेदतात्पर्यमाह परोक्षवाद इति यत्रान्यथा स्थितोऽर्थः तं संगोपयितुमन्यथा कथ्यते स परोक्षवादः।
तथा च श्रुतिः तं वा एवं चतुर्होतारं संतं चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव इति परोक्षवादत्वमेवाह क
र्ममोक्षायेति ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षायेत्यत आह बालानामनुशासनं यथा भवति तथा अ
त्र दृष्टान्तः अगदमौषधं यथा पिता बालमगदं पाययन् खण्डलड्डुकादिभिः प्रलोभयन् पाययति तद्वत्

परोक्षवादो वेदोऽयं बालानामनुशासनं कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ४४
नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ४५

नियतानि नैतावता गदपानस्य तल्लाभः प्रयोजनं अपि त्वारोग्यं तथा वेदोऽप्यवान्तरफलैः प्र
लोभयन् कर्ममोक्षायैव कर्माणि विधत्ते ४४ ननु कर्ममोक्षश्चेत्पुरुषार्थस्तर्हि प्रथममेव कर्म
त्यज्यतां अत आह नाचरेदिति अजितेन्द्रियत्वात् अज्ञः स्वयं आलस्यादिना यदि नाचरेत् तर्हि वि
कर्मणा कर्मानाचरणलक्षणेनाधर्मेण मृत्योरनन्तरं मृत्युमेव प्राप्नोति तथा च श्रुतिः मृत्योः पुन
र्मृत्युमापद्यते अर्द्यमानः स्वकर्मभिरिति ४५ ॥ रामः ॥ रामः

तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धं ननु कर्मणा क्रियमाणे तस्मिन्नाशक्तिः तत्फलं च स्यात् न तु नैःकर्म्यसिद्धिरत आह । निःसंगः अनभिनिवेशवान् ईश्वरेऽर्पितं न तु फलोद्देशेन ननु फलस्य श्रुतत्वात्कामना कृते फलमेव देव न रोचनार्थेति कर्मणि रुच्युत्पादनार्थं अगदपानं खंडुलड्डुकादिवत् ततश्च कर्मभिरव्या वेदार्थं सम्यग्विचारयति तदाचर्यो वाणं तदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः इत्यनात्मज्ञस्य कृपणता तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति यज्ञादीनामात्मज्ञानशेषतां चावधारयति । काम्ये कर्मसु प्रवर्तते न तस्य स्वर्गकामो यजेतेत्यादिभिः का

वेदोक्तमेव कुर्वाणो निःसंगोऽर्पितमीश्वरे नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः

४६ य आशु हृदयग्रंथिं निर्जिहीर्षुः परात्मनः विधिनोपचरेद्देवं तंत्रोक्तेन च केशवं

४७ लब्ध्वानुग्रह आचार्यात्तेन संदर्शितागमः महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः

४८ शुचिः संमुखमासीनः प्राणसंयमनादिभिः पिंडं विशोध्य संन्यास कृतरक्षोऽर्चयेद्धरिं

४९ ॥ म्नस्यैव स्वर्गादेः फलत्वेनावगमात् कामितोऽसौ न भवतीति नैष्कर्म्यसिद्धिर्भवतीति भावः ४६ वैदिकं कर्मयोगमुक्त्वा तांत्रिकमाह य आशु इति परात्मनः परस्यैव सत आत्मनो जीवस्य हृदयग्रंथिं अहंकारबंधं निर्हर्तुमिच्छुः स तंत्रोक्तेन च विधिना प्रकारेण भजेत् तंत्रमागमः चकाराद्वैदिकेन सह समुच्चयमाह ४७ तमेव विधिमाह लब्ध्वानुग्रह इत्यादिना तेनाचार्येण संदर्शितः आगमः अर्चनप्रकारो यस्य सः ४८ स्थितैः संमुखमासीनः आदिशब्देन भूतशुद्ध्यादिभिः पिंडं देहं विशोध्य संन्यासैः षडंगन्यासैः कृता रक्षा येन सः ४९॥ रामः रामः

आदावेवद्रव्याणिपुष्पादीनि जंत्वादिशोधनेनक्षितिंसमार्जनादिना आत्मानमव्यग्रतयालिंगंमूर्तिंचा
गंधलेपक्षालनादिनानिष्पाद्ययोग्यानिकृत्वा ५० पाद्यादिपात्राण्युपकल्प्यासंनिधाप्यहृदिसंपूजितंमू
र्तौध्यात्वा हृदादिभिःहृदयशिरःशिखाकवचनेत्रास्त्रमंत्रैःमूलमंत्रेणचेदेवंकृतन्यासोमूलमं
त्रेणार्चयेत् ५१ अंगानिहृदयादीनिउपांगानिसुदर्शनादीनितत्सहितां सपार्षदांसपरिचारकैरु

अर्चादौहृदयेवापियथालब्धोपचारकैः द्रव्यक्षित्यात्मलिंगानिनिःपाद्यप्रोक्ष्यचासनं
५० पाद्यादीनुपकल्प्याथसंनिधाप्यसमाहितः हृदादिभिःकृतन्यासोमूलमंत्रेणचार्च
येत् ५१ सांगोपांगांसपार्षदांतांतांमूर्तिस्वमंत्रतः पाद्यार्घ्याचमनीयाद्यैःस्नानवासोविभू
षणैः ५२ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः सांगंसंपूज्यविधिवत्स्तवैःस्तुत्वा
नमेद्धरिं ५३ आत्मानंतन्मयंध्यायन्मूर्तिसंपूजयेद्धरेः शेषमादायशिरसास्वधाम्न्युद्वा
स्यसत्कृतं ५४ एवमग्न्यर्कतोयादावतिथौहृदयेचयः यजतीश्वरमात्मानमचिरा
न्मुच्यतेहिसः ५५ इतिश्रीभागवतेमहापु० पारम० वैया० एका० तृतीयोध्यायः ३॥

पचारैरर्चयेत् तदाह पाद्येति आद्यशब्देनमधुपर्कमाचमनंच ५२ अक्षतातिलकालंकारैर्न
तुपूजायां नाक्षतैरर्चयेद्विष्णुं नकेतक्यामहेश्वरमितिनिषेधात् उपहारोनैवेद्यं ५३ शेषांनिर्माल्यं
स्वधाम्निस्वस्थानेदेवंहृदिमूर्तिकरंडके उद्वास्यस्थापयित्वापूजांविसर्जयेदित्यर्थः ५४ ।
तांत्रिकंकर्मयोगमुपसंहरतिएवमिति ५५ इतिश्रीएकादशेटीकायांतृतीयोध्यायः ३॥ रामः॥

चतुर्थेत्ववतारेहाश्चन्नस्यांतरमुक्तवान् जयंतीनंदनोनाम्नाद्रुमिलोनवसत्तमः १ सत्यीमिमितयात्मान
स्यनेनात्मनःप्रियमवतारं एजोयदिह्युक्तेःवतारस्तानमयेतितं तथांसांवैःस्तुत्वानमेदुरिमिद्युक्तेगुणकमैता
नेचापेहितं अतःव हानियानियानीतिकर्त्ताकरिष्यति १ त्वयाव्छानिकालत्रयसंबंधिसकलावतारगुण
कर्माणिकथयितुमशक्यानिसंक्षेपतस्तु कानिचित्कथयिष्यामीत्याहः योवाइत्यादिना अनुक्रमिष्यन्गण
यितुमिच्छतियःसतुबालानामिवबुद्धिर्यस्यसमंदमतिः कालेनमहतापिमहामतिः रजांसिगणयेदपिनत्व
खिलशक्तिधाम्नःसर्वशक्त्याश्रयस्यभगवतोगुणांस्तुनैवगणयेत् तथाचश्रुतिःविष्णोर्नुकंवीर्याणिप्रवो।

राजोवाच यानियानीहकर्माणियैर्यैःस्वच्छंदजन्मभिः चक्रेकरोतिकर्त्तावाहरिस्तानिब्रुवंतुनः १ द्रुमिलउवाच योवाअनंतस्यगुणाननंताननुक्रमिष्यन्सतुबालबुद्धिः रजांसिभूमेर्गणयेत्कथंचित्कालेननैवाखिलशक्तिधाम्नः २ भूतैर्यदापंचभिरात्मसृष्टैः पुरंविराजंविरचय्यतस्मिन्स्वांशेनविष्टःपुरुषाभिधानमवापनारायणआदिदेवः ३ यत्कायएषभुवनत्रयसन्निवेशोयस्येंद्रियैस्तनुभृतामुभयेंद्रियाणि ज्ञानंस्वतःश्वसनतोबलमोजईहासत्वादिभिःस्थितिलयोद्भवआदिकर्त्ता ४ ॥

चयःपार्थिवानिविममेरजांसीत्यादि २ तत्रादौपुरुषावतारमाह भूतैरितियदास्व।
सृष्टैःभूतैर्विराजंब्रह्मांडंपुरंनिर्मायतस्मिन्लीलयास्वांशेनविष्टस्तदाप्रविष्टः नतुभोक्तृत्वेन अभूतपुराय
स्यजीवस्यतत्रभोक्तृत्वात् ३ अस्यगुणकर्माण्याह यत्कायइति यस्याधिष्ठेयःकायएषःकायइ।
तिसप्तमीवा तनुभृतांसमष्टिव्यष्टिजीवानांज्ञानकर्मेंद्रियाणियस्यस्वतःस्वरूपभूतात्सत्वात्तनुभृतांज्ञानंयस्य
स्वतःसिद्धज्ञानमितिवायस्यश्वसनतःप्राणात्बलंदेहशक्तिः ओजःइंद्रियशक्तिःईहाक्रियायस्यस
त्वादिभिर्विश्वस्थितिलयोद्भवेआदिरीहाक्रियाकर्त्ता ४ ॥ रामः ॥ ॥

आदिकर्तृत्वेनतत्सर्वंकर्तृत्वमपिसूचितंतद्दर्शयितुंगुणावतारद्वाराचर्ष्यस्यादिकर्तृत्वमाह।
आद्यावियस्यानुषंगः यस्यरजसाअस्यजगतः सर्गकार्येशतधृतिर्ब्रह्माऽभूत् स्थितौचविष्णुःप।
त्यस्वेनेतिशेषः क्रतुपतिःफलदाताद्विजातीनांतद्धर्माणांचसेतुः रक्षितात्वक्‌ इत्यर्थः यस्यतमसाअ
प्याय्यापाययरुद्रोऽभूत् इतिगतैर्ब्रह्मादिभिर्निमित्तभूतैः प्रजासुउद्भवादयोयतोभवंतिसआद्यःपुरुषःइत्य
न्वयः ५ धर्मस्यभार्यायांदक्षदुहितरिमूर्तिसंज्ञायांनारायणोनरइतिनरऋषिरूपेणअजनिष्टजातः तच्चरितमाहनै

आदावभूच्छतधृतीरजसास्यसर्गेविष्णुःस्थितौक्रतुपतिर्द्विजधर्मसेतुः रुद्रोऽप्ययायतमसापुरु
षःसआद्यइत्युद्भवस्थितिलयाःसततंप्रजासु ५ धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणो
नरऋषिप्रवरःप्रशांतः नैष्कर्म्यलक्षणमुवाचचचारकर्मयोऽद्यापिचास्तऋषिवर्यनिषे
वितांघ्रिः ६ इंद्रोविशंक्यममधामजिघृक्षतीति कामंन्ययुंक्तसगणंसबदर्युपाख्यं ग
त्वाप्सरोगणवसंतसुमंदवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ७

नैष्कर्म्यमात्मस्वरूपंलक्ष्यतेयेनतन्नैष्कर्म्यंनिर्हाररूपंवाउवाचनारदादिभ्यः स्वयंचचारचयोऽद्यापि
कर्माचरन्नास्तेऋषिवर्यैर्निषेवितांघ्रिर्यस्य सः ६ भगवदवतारत्वद्योतकंपरमोपशमंदर्श
यितुमितिहासमाह इंद्रइतिदशभिः धामस्थानंतपसाग्रहीतुमिच्छतीतिविशंक्यतपोनाशायका
मंसपरिवारंप्रेषयामास। सःकामः बदरीमित्याख्यायतेयस्तंतस्याश्रमं अप्सरोगणादिभिः
सहगत्वास्त्रीणांप्रेक्षणान्येवइषवोबाणास्तैरविध्यत् नतस्यमहिमानंजानातीतिअतन्महिज्ञः
७

अक्रमं अपराधं अहो अहं धीर इति विस्मयो गर्वस्तद्रहितः एजमानान् शापभिया कंपमानान् भो विभो समर्थ
हे देववध्वः मा भैष्ट बलिं आतिथ्यं नो अस्माकं गृह्णीत इदमस्माकं आश्रमं आतिथ्याभावे शून्यप्रायः स्यादित्यर्थः
८ हे नरदेव अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते ल
ज्जाभारेणावनतशिरस्का इत्यर्थः सघृणं दयया भवति कृपां जनयन्त इत्यर्थः कृपायुक्तमिति वा मायया
नः परे इतो विकृते स्वारामाश्च ते धीराश्च तेषां निकरैरानतं पादपद्मं यस्य तस्मिन् त्वय्येतत् अस्तो भानुकंपा

विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् मा भैष्ट भो मदन मारुत
देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वं ८ इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्र
शिरसः सघृणं तमूचुः नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे
तार ९ त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलंघ्य परमं व्रजतां पदं ते नान्यस्य बर्हिषि बली
न् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि १०

हि न विचित्रं ९ अस्माकं चापराधाचरणं स्वभावत्वान्न चित्रमित्याहुः त्वामिति त्वां सेवतां सेवमाना
नां सुरैरिन्द्रादिभिः कृता अन्तराया विघ्ना भवंति कस्मादित्यत आहुः स्वौक इति स्वस्थानं स्वर्गमतिक्रम्य पर
मं तव स्थानं व्रजतां नान्यस्य त्वामसेवमानस्य कुतः बर्हिषि यज्ञे स्वभागान् पुरोडाशादीन् बलीन् करान्
कृषिकः स्वराज्ञे इन्द्रादिभ्यो ददतः प्रयच्छतः तर्हि किं मद्भक्तो विघ्नैरभिभूयत इत्याहुः धत्त इति यदीति निश्चये
यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकः अतोऽसौ विघ्नानां मूर्ध्नि पदं धत्ते कुतः पुनस्त्वयि विघ्नशंकेति
भावः १० ॥ ःः ःः ःः ॥

त्वद्भक्तानां तु केवलं तपश्च रक्षतां द्यागतिः अस्माकं वा वशं यांति क्रोधस्य वा। तत्रास्मद्वशाः कामोपभोगम
पितावदनुभवंति क्रोधस्य वशाः पुनरपि मदाद्यन्नाहुः तृडिति तृट् च त्रिकालगुणाश्च शीतोष्णवृ
ष्टिधर्मा मारुतश्च प्राणो वायुर्वा जैह्वा जिह्वाभोगाश्च शैश्न्या गुह्योपभोगाश्च तानस्मान् अपारजलधि
रूपानतितीर्य विलंघ्य गोष्पदे निमज्जंति कुतः यतः क्रोधस्य विफलस्य वशं यांति गच्छंति किंच ते तेऽमी
केचिद्यथा विवशाः संतो मत्कारोपितं भारमुत्सृजंति तथा दुश्चरं तपो मोक्षाय च भोगाय च शापादिना दुश्च

तृट्त्रिकालगुणमारुतजैह्वशैश्न्यानस्मानपारजलधीनतितीर्य केचित् क्रोधस्य यांति
विफलस्य वशं पदे गोर्मज्जंति दुश्चरतपश्च वृथोत्सृजंति ११ इति प्रगृणतां तेषां स्त्रियो।
त्यद्भुतदर्शनाः दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः १२ ते देवानुचरा दृष्ट्वा स्त्रि
यः श्रीरिव रूपिणीः गंधेन मुमुहुस्तासां रूपौदार्यहतश्रियः १३ तानाह देवदेवेशः प्रण
तान् प्रहसन्निव आसामेकतमां वृंध्वं सवर्णां स्वर्गभूषणां १४ ओमित्यादेशमादाय नत्वा
तं सुरवंदिनः उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः १५ इंद्रायानम्य सदसि शृण्वतां
त्रिदिवौकसां ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः १६ ॥

रं तप उत्सृजंति ११ स्त्रियः
योगनिर्मिताः स्त्रीः शुश्रूषां कुर्वतीः स्वर्चिताः तेषां लावण्यादिदर्पोपशमाय दर्शयामास १२ रूपिणीः
मूर्तिमतीः श्रीरिव ताः स्त्रीर्दृष्ट्वा तासां तु रूपौदार्येण महत्त्वेन हता श्रीः कांतिर्येषां ते १३ वृंध्वं गृणी।
ध्वं कथं वयं वराकाः कथं वृणीमहे इति चेत्तत्राह सवर्णां समानरूपां नैकाः अस्मदनुरूपा इति चेत् मा भवंतु तथापि
स्वर्गस्य भूषणरूपां १४ सुरवंदिनो देवभृत्याः १५ इंद्राय इंद्रं प्रति नारायणबलं ऊचुः शक्रः तत्रा।
सत्रासः भयात् विस्मितश्च तत्र वा विस्मितः आसेति वा १६ ॥ ॥

अन्यानप्यवतारांस्तच्चरितानि चाह हंसस्वरूपीति दत्तः दत्तात्रेयः कुमारः सनकादिः नः पिता ऋ
षभश्च विष्णुरेव कलयावतीर्णः सन्नात्मयोगमवदत् तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभि
दा समतानेन ततः पातालतः श्रुतय आहृताः १७ इला पृथ्वी ओषधयश्च गुप्ताः क्रोडे वराहावता
रे ग्राहाद्गजेन्द्रमुंचन्मोचयामास एवमादौ यत्रावतारनामान्नास्ति तत्र विष्णुः शिवाय जगतां क

हंसस्वरूप्यवदद च्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः विष्णुः शिवाय
जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये १७ गुप्तोऽप्यये मनुरिलौषध
यश्च मात्स्ये क्रौडे हतो दितिज उद्धरताम्भसः क्ष्मां कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे
ग्राहात्प्रपन्नमिभराजममुंचदार्त्तं १८ संस्तुवतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च
वृत्रवधतस्तमसि प्रविष्टं देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय
सतां नृसिंहे १९ देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वान्तरेषु भुवनान्यदधात्कला।
भिः भूत्वाथ वामन इमामहरद्बलेः क्ष्मां याच्ञाछलेन समदाददितेः सुतेभ्यः २०

लयावतीर्णः इत्यनुवर्तनीयं १८ संस्तुवतः स्तुतिं कुर्वाणान् ऋषीन् वालखिल्यान् कश्यपार्थं स
मिधाहरणे गोष्पदे निमग्नान् इन्द्रेणोपहसितान् उद्धृत्य अपदे मोचयत् तमसि वृत्रहत्यायां प्रवि
ष्टं मोचयामास असुरगृहे पिहिता या देवस्त्रियस्ताश्चामुंचदनेकावतारैः १९ अन्तरेषु सर्वम
न्वन्तरेषु कलाभिर्मूर्तिभिर्भुवनानि अदधात् अपालयत् इमां क्ष्मां समदात् ददौ २०

हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः स रामो दाशरथिः सन् सफलं कं लंकायां स्थितं च जयति
वर्तमानकालीनोवतार इत्यर्थः २१ भाविनां रामकृष्णावतारमाह भूमेरिति बुद्धावतारमाह वादै
रिति अतदर्हान् यज्ञानर्हान् दैत्यान् विमोहयिष्यति कल्क्यवतारमाह शूद्रानिति न्यहनिष्यति
२२ २३ इतिश्रीएकादशे चतुर्थः ४ पंचमे भक्तिहीनानां का निष्ठा को युगे युगे पूजाविधिरिति
प्रश्नद्वयस्योत्तरमुच्यते त्वां सेवतां सुरकृता बहवोंतरायाः इत्यनेन नष्टो हि भक्तो विघ्नमूर्द्धि पदं द

निःक्षत्रियामकृत गां च त्रिसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः सोऽब्धिं बबंध द
शवक्त्रमहन् सलंकं सीतापतिर्जयति लोकमलघ्नकीर्तिः २१ भूमेर्भरावतरणाय यदुष्व
जन्मा जातः करिष्यति सुरैरपि दुष्कराणि वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान्कलौ
क्षितिभुजो न्यहनिष्यदंते २२ एवंविधानि कर्माणि जन्मानि च जगत्पतेः भूरीणि भूरिय
शसो वर्णितानि महाभुज २३ इतिश्रीभागवते महापुराणे पारमहं० सं० वै० एकादशस्कं
धे चतुर्थोऽध्यायः ४ राजोवाच भगवंतं हरिं प्रायो न भजंत्यात्मवित्तमाः तेषामशांतका
मानां का निष्ठाऽविजितात्मनां १ चमस उवाच मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।

त्वा परां गतिं याति अभक्तानां तु विघ्ना भवंतीत्युक्तेन ह्रिनेषां का गतिर्भवतीति पृच्छति भगवं
तमिति हे आत्मवित्तमाः अविजितात्मनां अत एव अशांतकामानां का निष्ठा किं प्राप्यमित्यर्थः
१ स्वजनकस्य गुरोर्भगवतोऽनादराद्दुष्टैर्हेतुर्दुर्गतिं यांतीति वक्तुं भगवतः सकाशाद्वर्णाश्र
माणामुत्पत्तिमाह मुखेति गुणैः सत्त्वेन विप्रः सत्त्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यः तमसा शूद्र इ
ति २

एषां मध्ये येऽज्ञात्वा न भजंति ये च ज्ञात्वाऽप्यवजानंति आत्मनः प्रभवो जन्म यस्मात्तं न भजंते भजनेऽकृते तु
नामध्याहरेश्वरमिति स्थानाद्भ्रंशमाह भ्रष्टाः ३ तत्र ये ज्ञात्वा भगवद्विधानामनुग्राह्यास्तानाह दूरे इति
दूरे हरिकथाश्रवणं येषां ते अत एव दूरे च अच्युतकीर्तनं येषां ते दूरेऽच्युतकीर्तना स्त्रियो ४
ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह विप्र इति श्रौतेन उपनयनाख्येन
उपलक्षमेतत् अध्ययनादिनापि हरेः पदांतिकं तद्भजनोचितमधिकारं प्राप्ता अपि मुह्यंति कर्मफ
लेषु सज्जंते कुतः आम्नायेषु ये वादा अर्थवादास्तैर्मोहकत्वया विद्यंते येषां ते तदुक्तं गीतासु यामि

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरं । न भजंत्यवजानंति स्थानाद्भ्रष्टाः पतंत्यधः ३ दूरे हरि
कथाः केचिद्दूरे चाच्युतकीर्तनाः । स्त्रियः शूद्रादयश्चैव तेऽनुकंप्या भवादृशां ४ विप्रो राजन्य
वैश्यौ वा हरेः प्राप्ताः पदांतिकं । श्रौतेन जन्मनाथापि मुह्यंत्याम्नायवादिनः ५ कर्मण्यको
विदाः स्तब्धा मूर्खाः पंडितमानिनः । वदंति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ६

मां पुष्पितां वाचं प्रवदंत्यविपश्चितः वेदवादरताः पार्थ नान्यदस्तीति वादिन इत्यादिना ५ भ
क्तिमार्गदर्शायतेषां मोहं प्रपंचयति वदंति कर्मण्यादिना अकोविदा यथा बंधकं न भवति त
था कर्तुमज्ञाः न चाभिज्ञान् पृच्छंति यतः स्तब्धाः अनम्राः स्तब्धत्वे हेतुः यतो मूर्खाः अपि पंडितमान्य
मिति मानवंतः अतः अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति
यत्र नोष्णं न च शीतं स्यान्न ग्लानिर्नाप्यनरायः इत्यादि कया माध्व्या गिरोत्सुकाः संतो मूढा
स्तया चाटुकान् अप्सरोभिः सह विचरिष्यामः इत्यादि प्रियांश्छंदानु वदंति ६ किं च तेषां कर्मा
निवेशात् कामक्रोधदंभाद्यपायेन दुष्टत्वमाह रजसेति घोराः अभिचारादिसंकल्पा येषां

ननु व्यवायादीनामपि ऋतौ भार्य्यामुपेयात् क्रतुशेषं भक्षयेदित्यादिना विहितत्वात्कथमेवं निन्द्यते अत आह
लोक इति व्यवायः स्त्रीसंगः नित्याः रागत एव नित्यप्राप्ताः जंतोः प्राणिमात्रस्य अतस्तत्र तासु चोदना वि।
धिर्नास्ति नन्वृतावुपेयादित्यादि विधिर्दृश्यते सत्यं नत्वयमपूर्वविधिः रागतः प्राप्तत्वात् किंतु नियम
विधिरूपेण रागिणामभ्यनुज्ञामात्रं क्रियते तेन दारव्यवस्थितिरिति तेषु व्यवायादिषु केः विवाहयज्ञसुराग्र। रा८
हैः विवाहविषय एव व्यवायः कार्यः यज्ञ एवामिषसेवा सौत्रामण्येव सुराग्रहाणां ग्रहणमिति क्रमेण नित्यत्वं चैव
मद्यसेवेति नियमः क्रियते ननु च नियमः क्रियते ननु च नियमस्यैवावश्यकत्वान्न निंदा युक्ता अत आ।

लोके व्यवायामिषमद्यसेवा नित्यास्तु जंतोर्न
हि तत्र चोदना ॥ ११ ॥

ह आसु निवृत्तिरिष्टेति अयं भावः नायं नियमविधिरपि नित्यप्राप्तत्वात् अतो निवृत्तिः परिसं
ख्याविधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते च आसु व्यवाया
मिषमद्यसेवासु विधिरिष्टः कथं तर्हि व्यवस्थितिरित्युक्तं उच्यते न तावत्परिसंख्याविधिनाऽस्या
स्या निवृत्तिरुच्यते तथा सति स्वार्थत्यागः परार्थकल्पना प्राप्तबाध इति दोषत्रयं स्यात् अतः
क्वचित्प्राप्तप्रतीत्यर्थस्य प्राप्तप्रामर्थक मित्यपूर्वविधि ॥ ॥ ॥

द्वारान्यनिवृत्तिः फलतो भवति तद्यथा इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र रश-
नाल्लिंगतो गर्दभाश्वाभिधानीरशनाद्वयप्राप्यतो मंत्रस्याऽश्वविधिद्वारा परिसंख्या अनेपद्योक्ता।
त्र वार्त्तिके अप्राप्तविधिरेवायमतो मंत्रस्य निश्चितः परिसंख्याफलेनोक्तो न विशेषः पुनः कृतैरिति
क्वचित्तु रागतो नित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्य नियमफलस्याप्यभावान्नियमविधिद्वारा फल-

व्यवस्थितिस्तेषु विबाहयज्ञसुराग्रहै-
रासु निवृत्तिरिष्टा। ११ ॥ ॥

तः परिसंख्या भवति यथा पंच पंचनखा भक्ष्या इति तथा रागतो नित्यप्राप्तस्य व्यवायादेर्विवाहादि।
नियमेनाभ्यनुज्ञाद्वारा परिसंख्यैवेति न तु पुनरभ्यनुज्ञामात्रमेतदुक्तं तर्हि ऋतुस्नातां तु यो भार्यां संनि।
धौ नोपगच्छति घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः इत्यादिदोषश्रवणं न स्यात् नैष दोषः म।
नसि कामे सत्यपि तस्यामरुच्याद्युपाधिना वा तामनुपगच्छतो दोषश्रवणोपपत्तेरिति सर्वमनवद्यं ११

अश्वाभिधान्यादानेस्वार्थः तस्यभागः गर्दभाभिधान्यादानाभावः विध्यपेक्ष्यापरस्यनिषेधस्यार्थस्त
स्यकल्पनालिंगादुभयत्राश्वाभिधानीगर्दभाभिधान्यो प्राप्तस्येमामगृ हृन्नशनामृतस्येतिमंत्रस्यगर्द
भाभिधान्यादानेबाधः विशेषाश्वाभिधान्यां अश्वाभिधानीमादत्त इतिश्रुतेः श्रुतेनपरिसंख्योक्तेत्यर्थः ।
श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवायेपारदौर्बल्यमर्थविप्रकर्षात् अश्रुतफलकाश्वमेध
संबंधिनः पशोः रसनाग्रहीतवत्‌ अपूर्वविधिनियमविधिः परिसंख्याविधिः तदेवंव्यवायादिमनोरथाकु
लितत्वात् शीघ्रमात्मानंभवेन्नती इदानींधनस्यापिधर्मद्वारापरमात्मप्रापकस्य दृष्टोपभोगार्थंविनि
योगान्नात्मज्ञानंगच्छतीत्याह धनंचेति धर्मएवैकफलंयस्यतत् कुतः यतः धर्मात्सविज्ञानंअपरोक्ष।

धनंचधर्मैकफलंयतोवैज्ञानंसविज्ञानमनुप्रशांति गृहेषुयुंजंतिकलेवरस्यमृत्युंन
पश्यंतिदुरंतवीर्यं १२ यत् घ्राणभक्षोविहितः सुरायाः तथापशोरालभनंनहिंसा एवंव्य
वायः प्रजयानरत्यै इमंविशुद्धंनविदुःस्वधर्मं १३॥

ज्ञानसहितंदृष्टंपरोक्षज्ञानंभवति कथंभू
तः अनुप्रशांति अनु अनंतरमेवप्रकृष्टाशांतिर्निर्वाणंलक्षणंयस्यतत् एवंभूतंधनंगृहेषुदेहाद्यर्थं
युंजंति १२ किंचव्यवस्थापापिव्यवायाद्यनुज्ञानयथेष्टा अपितन्नयथैवेत्याह यदिति यद्यस्मात्सु।
रायाः घ्राणभक्षः अवघ्राणमेवविहितः नपानंतथापशोरप्यालभनमेवविहितंनतुहिंसा ॥ अयमर्थः दे
वतोद्देशेनयत्पशुहननंतदालभनं वायव्यंश्वेतमालभेतेत्यादिश्रुतेः नतुहिंसायावद्विहिताहिंसानस्याद्धिं
सेतिकोऽर्थः इतिवचनात् भक्षणोद्देशेनतुक्रियमाणंतदालभनंलौकिकहननवद्धिंसैव अत्रआलभनमे।
वविहितंनतुहिंसा अतोनयथेष्टभक्षणाभ्यनुज्ञेत्यर्थः व्यवायोऽपिप्रजयानिमित्तभूतयानतुरत्यै अतोमनो

भा०ए०

२१

एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपंच्य तन्निष्ठां प्रपंचयति पंचभिः ये त्विति अनेवंविदः न एवं विदः न एवं
धर्मं विदंति ये ते विस्रब्धाः निःशंकाः अनेन मनोरथो भविष्यतीति विश्वस्ता वा तदानीं न तु पोषणेन वा तैः पशु
भिर्विश्वस्ताः ते च पशवः प्रेत्य अमुत्र तान् खादंति मांस भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहं एतन्मांसस्य मां
स त्वं प्रवदंति मनीषिणः इति वचनात् १४ अभिचारादिना द्विषंतः मृतके देहे सानुबंधे पुत्रादिसहिते १५
अज्ञास्तत्त्वज्ञैः अनुकंपिताः स्मरंति तत्त्वज्ञाः स्वतः ये तु नात्यंतमज्ञाः न च तत्त्वज्ञाः तेषां तत्रावर्तिनां पतनीयता

नि१

ये त्वनेवंविदोऽसंतः स्तब्धाः सदभिमानिनः पशून्द्रुह्यंति विस्रब्धाः प्रेत्य खादंति ते च तान् १४
द्विषंतः परकायेषु स्वात्मानं हरिमीश्वरं मृतके सानुबंधेऽस्मिन्बद्धस्नेहाः पतंत्यधः १५ ये कैव
ल्यमसंप्राप्ता ये चातीताश्च मूढतां त्रैवर्गिका ह्यक्षणिका आत्मानं घातयंति ते १६ एत आ
त्महनोऽशांता अज्ञाने ज्ञानमानिनः सीदंत्यकृतकृत्या वै कालध्वस्तमनोरथाः १७ हित्वा
त्मायासरचिता गृहापत्यसुहृच्छ्रियः तमो विशंत्यनिच्छंतो वासुदेवपराङ्मुखाः १८ राजो
वाच कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः नाम्ना वा केन विधिना पूज्यते तदिहोच्यतां १९

शि१

ह यः इति कैवल्यं तत्त्वज्ञानमसंप्राप्ताः अत्र हेतुः त्रिवर्गप्रधानाः अक्षणिकाः उपशांतिव्यापाररहिताः देहादिस्थैर्य
बुद्ध्या वा स्वयमेवात्मानं घातयंति १६ तदाह एत इति आत्महनः आत्मापह्नवकर्तारः अज्ञाने कर्मणि तथा च
श्रुतिः असुर्या नाम ते लोका अंधेन तमसावृताः तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जना इति १७ यागृहा
पत्यसुहृच्छ्रियस्ताः हित्वा १८ तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति कस्मिन्काल इति किं वर्णः
कीदृग्वर्णो वा नु कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना १९ ॥ ऽऽ ॥ ऽऽ ॥

रामः

२१

एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण २० तदेव वर्णादिचतुष्टयमाह कृत इत्यादिना कृष्णाजिनादीन् बिभ्रदिति ब्रह्मचारिवेषो दर्शितः २१ तपसा ध्यानेन २२ २३ त्रिगुणा दीक्षांगभूता मेखला यस्य सः यज्ञमूर्तिः हिरण्यकेशः पिशंगकेशः २४ त्र

करभाजन उवाच कृतं त्रेता द्वापरं च कलिरित्येषु केशवः नानावर्णाभिधाकारो नानैव विधिनेज्यते २० कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलांबरः कृष्णाजिनोपवीताक्षान् बिभ्रद्दंडकमंडलू २१ मनुष्यास्तु तदा शांता निर्वैराः सुहृदः समाः यजंति तपसा देवं शमेन च दमेन च २२ हंसः सुपर्णो वैकुंठो धर्मो योगेश्वरोऽमलः ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते २३ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः २४ तं तदा मनुजा देवं सर्वदेवमयं हरिं यजंति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः २५ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः वृषाकपिर्जयंतश्च उरुगाय इतीर्यते २६ द्वापरे भगवान् श्यामः पीतवासा निजायुधः श्रीवत्सादिभिरंकैश्च लक्षणैरुपलक्षितः २७ ॥

प१

य्या विद्यया वेदत्रयोक्तकर्मभिः २५ पृश्निगर्भः तस्याः पुत्रः वृषाकपिः स्मृतः सन् वर्षति कामान् आकंपयति क्लेशानिति वा जयत्येव सर्वदा जयंतः २६ श्यामः अतसीपुष्पसंकाशः निजानि चक्रादीन्यायुधानि यस्य सः श्रीनाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः सः आदिर्येषां करचरणादिगतपद्मादीनां तैः अंकैः चिह्नैः लक्षणैर्वान्यैः कौस्तुभादिभिः २७ ॥ऽऽ॥ऽऽ॥

महाराजोपलक्षणं छत्रचामरादियुक्तं वेदतंत्राभ्यां वैदिकेनागमिकेन च मार्गेणा यजंति पूजयंति
परं ईश्वरं ज्ञातुमिच्छवः २८ नामान्याह नमस्त इति २९ ३० नानातंत्रविधानेनेति कलौ तंत्र
विधानेनेति कलौ तंत्रमार्गस्य प्राधान्यं दर्शयति ३१ स्वनाम्ना वर्णयति त्विषा कांत्या कृष्णं इंद्रनीलमणिव
दुज्ज्वलं यद्वा त्विषाकृष्णं कृष्णावतारं अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति अंगानि हृदयादीनि उपां
गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः सुनंदादयः तैः सहितं यज्ञैः अर्चनैः संकीर्तनं नामोच्चार ॥

तं तदा पुरुषं मर्त्या महाराजोपलक्षणं यजंति वेदतंत्राभ्यां परं जिज्ञासवो नृप २८ न
मस्ते वासुदेवाय नमः संकर्षणाय च प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः २९ ना
रायणाय ऋषये पुरुषाय महात्मने विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ३० इति
द्वापर उर्वीश स्तुवंति जगदीश्वरं नानातंत्रविधानेन कलावपि यथा शृणु ३१ कृष्ण
वर्णं त्विषाकृष्णं सांगोपांगास्त्रपार्षदं यज्ञैः संकीर्तनप्रायैर्यजंति हि सुमेधसः ३२ ध्येयं स
दा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यं भृत्यार्तिहं प्रणतपाल भ
वाब्धिपोतं वंदे महापुरुष ते चरणारविंदं ३३ ॥ णं स्तुतिश्च तत्प्रधानैः सुमेधसो विवेकिनः ३२ स्तु

तिमाह ध्येयमिति हे प्रणतपाल हे महापुरुष ते चरणारविंदं वंदे कथंभूतं ध्येयं ध्यातुं योग्यं सदेति सर्वत्र संबं
ध्यते ध्येयत्वे हेतवः इंद्रियकुटुंबादिभिर्यः परिभवस्तिरस्कारस्तं हंतीति तथा तत् किंच अभीष्टदोहं मनोर
थपूरकं किंच तीर्थानां आस्पदं गंगोद्भवात्स्पदत्वेन परमपावनं शिवविरिंचिभ्यां नुतं स्तुतं महत्तमं ननु लोकनाथावे
व किमर्थं ताभ्यां नुतं तत्राह शरण्यं आश्रयणीयं मुख्यत्वात्मकमित्यर्थः तर्हि ब्रह्मादिस्तुत्यत्वात्तस्य कथं गोच
रत्वात् न भृत्यार्तिहं यस्य कस्यापि भृत्यमात्रस्यार्तिं हंति न केवलमागंतुकार्तिमात्रं हंति किंतु भवाब्धिपो

भा ३

इदानीं स्वयमाप्तकामत्वान्नैरपेक्ष्यं भक्तार्थं च सापेक्षतां दर्शयन् श्रीरामचंद्रं स्तौति त्यक्त्वेति अमरैः सुदुस्त्य
जया सुरेप्सिता राजलक्ष्मीस्तां त्यक्त्वा यदिति पदस्यार्थः यः अरण्यमगात् किं राज्यवैकल्यदर्शनेन न ध
र्मिष्ठः कुतः आर्यस्य गुरोः दशरथस्य वचसा किंच एवं स्वराज्यं त्यक्त्वापि भक्तवात्सल्येन दयितया सी
तया इप्सितं मायामृगं स्वीकारयोन्वधावत् तस्य भगवतश्चरणारविंदं वंदे यद्वा हे धर्मिष्ठेति संबोध
नेन त्याज्याप्यविवक्षित्वात्तत्त्वाद्रघिपदेन संधिर्न भवति तथा यदगादिति चरणारविंदमेवोच्यते यत् मायाम

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यं मायामृगं दयिते- गाद् १
प्सितमन्वधावद्वंदे महापुरुष ते चरणारविंदं ३४ एवं युगानुरूपाभ्यां भगवान्युगवर्ति
भिः मनुजैरिज्यते राजञ्छ्रेयसामीश्वरो हरिः ३५ कलिं सभाजयंत्यार्या गुणज्ञाः सारभागि
नः यत्र संकीर्तनेनैव सर्वः स्वार्थोभिलभ्यते ३६ न ह्यतः परमो लाभो देहिनां भ्राम्यतामि
ह यतो विंदेत परमां शांतिं नश्यति संसृतिः ३७ घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते वा
सुदेवपरा मर्त्यास्ते कृतार्था न संशयः ३८ ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितं ये स्म
रंति स्मारयंति हरेर्नाम कलौ युगे ३९ कृतादिषु प्रजा राजन् द्राविडेषु च भूयशः ताम्रपर्णी
नदी यत्र कृतमाला पयस्विनी ३९

गमन्वधावत् तत्पदारविंदं वंदे इत्यन्वयः अन्यत्समानं ३४ युगा
नुरूपाभ्यां नामरूपाभ्यां ३५ एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह कलिमिति गुणज्ञाः कलेर्गुणं जानं
ति येते न तु दोषाणां बाहुल्यात् कथं सभाजयंतीत्यत आह सारभागिनः गुणांशग्राहिणः कोसौ गुणः तमाह य
त्रेति तदुक्तं ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् यदाप्नोति कलौ संकीर्त्य केशवमिति ३६
तस्मात् कलौ अतः अस्मात् संकीर्तनात् परमो लाभो नास्ति यतः संकीर्तनात् ३७ किंच कृतादिष्विति ३८।३९

राजन्कलाविच्छंति संभवं कलौ खलु भविष्यंति नारायणपरायणाः ३९ कचित्कचिन्मह॥ २॥ म्हलस्त्र

अमलाशयाः संतः प्रायः प्रायशो भगवति भक्ता भवंती ४० भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह देवर्षीति आप्ताः पोष्याः कुटुंबिनः इतरे देवादयः पंचयज्ञदेवताः एषां यथा अन्यः ... अतएव तेषां किंकरः तदर्थं नित्यं पंचयज्ञादिकर्त्ता न तथा च स्मृतिः हीनजातिं परिक्षीणम् ऋणार्थं कर्म कारयेदिति अयं तु न तथा कोसौ यः सर्वभावेन शरण्यं मुकुंदं शरणं गतः कर्त्तं कृत्यं परिहृत्य पृथक्कर्त्तभेदः परिहृत्य कृतिच्छेदनः तस्मात् वासुदेवः सर्वमिति बुध्येत्यर्थः ४१ विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्ति

कावेरी च महापुण्या प्रतीची च महानदी ये पिबंति जलं तासां मनुजा मनुजेश्वर प्रायो भक्ता भगवति वासुदेवे मलाशयाः ४० देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्त्तं ४१ स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः ४२ नारद उवाच धर्मान्भागवतानित्थं श्रुत्वा समिथिलेश्वरः जायंतेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ४३ ततोंतर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः राजा धर्मानुपातिष्ठन्नवाप परमां गतिं ४४ त्वमप्येतान्महाभाग धर्मान्भागवतान्श्रुतान् आस्थितः श्रद्धया युक्तो निःसंगो यास्यसे परं ४५

माह स्वपादमूलमिति त्यक्तः अन्यस्मिन् देहादौ देवतांतरे वा भा वोयेन अतएव तस्य विकर्मणि प्रवृत्तिर्न संभवति यच्च कथंचित्प्रमादादिना उत्पतितं भवेत् तदपि हरिर्धुनोति ननु यमस्तन्न मन्यते तत्राह परेशः ननु श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात् स्वाज्ञाभंगं कथं सहेत तत्राह प्रियस्य ननु वा यथा पापं भजते तत्राह हृदि संनिविष्टः नहि वस्तुशक्ति रर्थितामपेक्षत इत्यर्थः ४२ जायंतेयान् जयंत्याः पुत्रान् ४३ उपातिष्ठन् ४४ ॥ निःसंगो भ

शास्त्रप्रक्रियेयमुक्ता पुत्रवात्तु संगत एव कृतार्थाविल्याह युवयोरिति द्वाभ्यां युवयोः ४६ न च सर्वकर्मार्प॥
णादिभागवतधर्मैरस्माकमिव युवयोः सत्वशुद्धिः संपादनीया पुत्रोपलालनेनैव भागवतधर्माः सर्वे
स्वनिष्पन्ना इत्याह दर्शनेति कृष्णे पुत्रस्नेहं प्रकुर्वतोर्वां तस्य दर्शनादिभिरात्मा पावितः शोधितः ४७
एतदेव कैमुत्यन्यायेन स्फुटयति वैरेणेति यं शयनासनादौ वैरेणापि ध्यायन्तस्तस्य गतिविलासाद्यैः आकृत

युवयोः खलु दंपत्योर्यशसा पूरितं जगत् पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ४६ द
र्शनालिंगनालापैः शयनासनभोजनैः आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ४७ वै
रेणयं नृपतयः शिशुपालपौंड्रशाल्वादयो गतिविलासविलोकनाद्यैः ध्यायन्त आकृतधि
यः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किं ४८ मापत्यबुद्धिमकृथाः कृष्णे सर्वात्म
नीश्वरे मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ४९ भूभारासुरराजन्यहंतवे गुप्तये सतां अवती
र्णस्य निर्वृत्यै यशो लोके वितन्यते ५० शुक उवाच एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः दे
वकी च महाभागा जहतुर्मोहमात्मनः इतिहासमिमं पुण्यं धारयेद्यः समाहितः स विधूयेह शमलं ब्र
ह्मभूयाय कल्पते ५२ इति श्रीभागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यामेकादशस्कं
धे पंचमोऽध्यायः ५

तद्धियस्तत्तदाकाराधीर्येषां ते तत्सारूप्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां तत्साम्यं भ
वतीति ४८ ननु पुत्रस्नेहः कृष्णे मोक्षहेतुस्तर्हि सर्वे मुच्येरन् तत्राह मापत्यबुद्धिमिति बुद्धिं मा कृथाः अडागमः छं
दसः ४९ ननु कथमीश्वरो मानुषः स्यात्कथं वा तस्य विश्वरक्षादिकर्तुः पुत्रनाशो वधादिकमाश्चर्यमिवरू
प्यते तत्राह भूभाररूपा असुरा एवाधर्मरूपा राजन्यास्तान् हन्तवे तान् हन्तुं निर्वृत्यै मोक्षाय ५०. ५२ इह अस्मिन्नेव देहे श

ह २

भा० ए०

२४

षष्ठे ब्रह्मादिभिः स्तुत्वा गन्तुं विज्ञापितं हरिं उद्धवः प्रार्थयामास स्वधाम नय मामिति अतः परमिति विस्तरेणात्मविद्यां निरूपयितुं प्रस्तावमाह अथेति आत्मजैः सनकादिभिः अभ्यगात् द्वारकामिति चतुर्थेनान्वयः ॥१॥ ननु तेषां रुद्रेन्द्रादिरूपेण भगवतो नित्यरूपत्वात् कुतो दिदृक्षा अत आह वपुषेति येन वपुषा नरलोकमनोरमः सन् सर्वलोकेषु यशो वितेने तदतिसुन्दरं वपुर्दिदृक्षवः ॥४॥ व्यचक्षत अपश्यन् स्वर्गोद्यानस्थैर्मा-

श्रीबादरायणिरुवाच अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥१॥ इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥२॥ गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ऋषयः पितरश्चैव सविद्याधरकिन्नराः द्वारकामुपसञ्जग्मुः सर्वे कृष्णदिदृक्षवः ॥३॥ वपुषा येन भगवान्नरलोकमनोरमः यशो वितेने लोकेषु सर्वलोकमलापहं ॥४॥ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनं स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमं गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरं ॥६॥ देवा ऊचुः नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥७॥ ॥ ॥

ल्यैः ॥५॥ चित्राणि सत्खलु वन्ध्यायानि पदानि अर्था यासु ताभिर्गीर्भिः ॥६॥ बुद्धीन्द्रियादिभिर्दर्शनादिना प्राणेन च वैकल्यहेतुनाऽऽदरेण वन्दनयोग्यतात्मनो नतावयं न मुख्यतः नता इति विस्मये यथाहुः दोर्भ्यां पद्भ्यां जानुभ्यामुरसा शिरसा दृशा वचसा चेति प्रणामोऽष्टाङ्ग ईरित इति स्मरणोक्तविस्मयाय विशेषणं कर्मपाशादुरुपाशान्मुमुक्षुभिर्भावयुक्तैरपि केवलं मनसा हृदि चिन्त्यते न तु दृश्यते तद्रूपं नताः स्म हे

राम:

२४

म१

ननु ममापि दृष्टादृष्टकर्मकरणात्कुतो मत्पदारविंदचिंतनं कर्मपाशान्मुमुक्षुभिः क्रियते तत्राहुः त्व
किमिति हे अजित आत्मनि इदं मूर्त्तं कर्मत्वं व्यक्तं महदादिप्रपंचं सृजसि पालयसि च तदप्यात्मन्येव
लुम्पसि दुर्विभाव्यं मनसाप्यन्यैरवितर्क्यं तद्गुणस्थः तस्या मायाया गुणेषु नियंतृत्वेन स्थितः अपि च
एतैः कर्मभिः भवान्नाज्यते न लिप्यते कुतः यो भवाननवद्यः रागादिरहितः यतः स्वे आत्मस्वरूपे सुखे।
अव्यवहिते अनावृते अभिरतः अतस्त्वं कर्म कुर्वन्नप्यात्मारामः परमेश्वर इति मुमुक्षुभिश्चिंत्यते।

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुंपसि तद्गुणस्थः
नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ८ शुद्धिर्नृ-
णां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः सत्वात्मनामृषभ
ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ९ स्यान्नस्तवांघ्रिरशुभा-
शयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः यः सात्वतैः समविभूतय आत्मवद्भिर्व्यू-
हेऽर्चितः सवनशः स्वरतिक्रमाय १०

इति भावः ८ नन्वात्मारामस्य किं कर्मकरणेन अत आहुः शुद्धि-
रिति हे ईड्य हे ऋषभ दुराशयानां रागिणां विद्या उपासना विद्यादिभिः तथा शुद्धिर्न भवति सत्वात्मनां सतां हि
ते यशसि श्रवणेन संभृतया परिपुष्टया अभिवृद्धया सच्छ्रद्धया यथा स्यात् परपावनस्य यशसो वितानाय त
व कर्माचरणमिति भावः ९ न केवलं त्वद्यशः श्रवणं शुद्धिहेतुः अस्माभिस्तूयमाने तवांघ्रिर्हेयः अतस्तवांघ्रिर्नः स्यात्
कं अशुभाशयानां विषयवासनानां धूमकेतुः तद्दाहकः स्यात् कथंभूतः यः क्षेमाय मोक्षाय मुनिभिः मुमुक्षुभिः
प्रेमार्द्रहृदा उह्यमानश्चिंत्यमानः यश्च सात्वतैर्भक्तैः समविभूतये समानैश्वर्याय वासुदेवादिव्यूहे अर्चितः तथ

किंच प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वा अध्वराग्नौ आहवनीयादौ यज्ञेके यक्ष्यन्ते ननु यस्यैव
वत्तायै हविर्गृहीत्वं स्यात्तौ ध्याये दूषट्कुरिष्यन्निति वचनात्तदेवतं क्षिप्यते अत आह त्रय्या निरुक्तेन विधि।
नाइन्द्रादिरूपेणैव यजन्तु पर यक्ष्यन्ते इत्यर्थः उत किंच अध्यात्मयोगे आत्माधिकारयोगे योगिभिरात्म
मायां तव मायां अणिमादिरूपां जिज्ञासुभिस्तत्कामैर्यक्ष्यन्ते परमभागवतैस्तु मुक्तैः परीष्टः सर्वतः पूजि
तः सततं वांघ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः ११ एतेषां च मुनिसालनादीनां मुण्णां सेवकानां मध्ये
परमभागवतेषु तस्या अपि नवप्रीतिस्तु वंति पर्युष्टया इति [illegible] भावः छार।

यक्ष्यन्ते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा अध्यात्मयो
ग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ११ पर्युष्टया तव विभो
वनमालयेयं संस्पर्द्धिनी भगवती प्रतिपत्निवच्छ्रीः यः सुप्रणीतममुयार्हणमाद
दन्नो भूयात्सदांघ्रिरशुभाशयधूमकेतुः १२ ॥ऽऽऽ॥ ऽऽ॥ ऽऽ॥

सः अहं पुत्रवत्सामिति त्रैवव्रतासि पर्युषिताः पीयं वसतीति प्रतिपत्निवत्सपत्नीवत् श्रीः संस्पर्द्धमाना भ।
वती तथापि तां स्पर्द्धमानां त्रिपमनादृत्य यो भवान्पर्युषितयाऽप्यमुया वनमालया भक्तैरर्पितेयमिति प्रीत्या
सुप्रणीतं सुष्ठु संपादितं यथा भवति तथार्हणं पूजामाददत् स्वीकृतवान् सुप्रणीतमर्हणमाददत् स नोऽ
शुभाशयधूमकेतुर्भूयादित्यन्वयः अयं चैवं संबंधः एतेभ्यो ध्यानार्चनादिनिष्ठेभ्यो पित्व द्यशसि प्रवृद्धसत्कृ
द्वावत एव कृतार्था भगवतो यशः प्रियत्वात्स्यादाह पर्युष्टया वनमालाकांतावित्यस्मात्परितः सर्वांगजुष्टया कां
तया शोभितया वनमालया वक्षसि एकदेशे वर्त्तमाना श्रीः संस्पर्द्धमाना भवति तथाप्यमापमनुचिते वक्रधाव

त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवंतः प्रार्थयंते केतुरिति बलिबंधने त्रिभिर्विक्रमैर्युतः तत्र द्वितीये विक्र-
मे सत्यलोकं गतस्तव पादः केतुः अत्युच्छ्रितो विजयध्वज इव तस्य पादस्योपरि त्रिपतत्पताकः त्रिधा पतंती त्रिषु लोकेषु
वा पतंती गंगा पताका यस्य सः तथा असुरदेवचम्वोः सेनयोः क्रमेण भयाभयकरः साधुषु सुरेषु स्वर्गाय योऽभू-
द्यः खलेष्वसुरेषु इतराय अधोगमनाय यश्च एवं केतुरूपस्ते पादः स भजतां नः अघं पुनातु शोधयतु अघ्नादिति
पादे भजतां नः इति कर्मणि षष्ठी यो अघाद्भजतोऽस्मान्पुनात्विति तथा च श्रुतिः चरणं पवित्रं विततं पुराणं येन पूत-
स्तरति दुःकृतानि तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः स्वर्गाय साधुषु खले-
ष्वितराय भूमन्पादः पुनातु भगवन्भजतामघं नः १३ नस्योतगाव इव यस्य वशे भवंति ब्रह्माद्य-
स्तनुभृतो मिथुरर्द्यमानाः कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य १४
अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः सोऽयं त्रिणाभिरखिला-
पचयप्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वं १५ ॥ ६ ॥ त २

सहस्वत अमृतस्य धारा बहुधा दोहमानं चरणं नो लो-
केषु सुधितां दधात्विति १३ ननु पुरुषो देवासुरादयः परस्परं जयंति जीयंते च किमहं तत्र तत्र आह नस्योतेति मिथुः मिथः अ-
र्द्यमानाः युद्धादिभिः पीड्यमानाः ब्रह्मादयोऽपि यस्य तव वशे भवंति न तु जयपराजययोः स्वतंत्राः क इव नसि नासिकायां ओ-
ताः नासिकायां विद्धा बद्धाः गावो बलीवर्दा इव कुतः कालस्य कलयितुः प्रवर्तकस्य तदेव कुतः प्रकृतिपुरुषयोरपि
परस्य तस्य ते पुरुषोत्तमपादः नः शं तनोतु १४ प्रकृतिपुरुषाभ्यां परत्वमुपपादयन् कालत्वेन पुरुषोत्तमत्वमाहुः अ-
स्येति अस्य जगत उदयादीनां हेतुरिति कुतः अव्यक्तं प्रकृति जीवः पुरुषः महान् महत्तत्वं तेषां कालं नियंतारं त्वामाहुः
अपि अस्य जगत उदयादीनां हेतुरिति कुतः अव्यक्तप्रकृतिजीव तरात्परतः परः महतः परमव्यक्तात्पुरुषः परः पुरु-
षान्न परं किंचित्सा काष्ठा सा परा गतिरित्याद्याः श्रुतयः किंच अयं संवत्सरात्मकोऽयं कालः त्रिणाभिः त्रीणि चातुर्मास्यानि।

त्वमेवप्रकृत्यादिद्वाराजगतस्तस्थुषश्चहेतुरित्युक्तं तत्केनप्रकारेणेत्याहुः त्वत्तः इति त्वत्तःपुरुषोवीर्यंशक्तिंसम
धिगम्यप्राप्यययामाययासहमहान्तंधत्ते किमिव अस्यविश्वस्यगर्भमिवसोयंमहान् तयैवमाययाऽनुगतःस
न् आत्मनःसकाशात् आण्डकोशंससर्ज तयानुगतइतिपाठेपितयामाययात्वयाधिष्ठितःसन्निति १६ नन्वेवमस्त
मीश्वरस्त्वंममकुतोऽवगतंतत्राहुः तदिति तत्तस्मात्तस्थुषःस्थावरस्यजगतोजंगमस्यचभवानधीशः यद्यस्मान्मायया
उत्थायोद्बुद्धंभिर्नानागुणविक्रियाभिरिन्द्रियवृत्तिभिरुपनीतान् अर्थान्विषयान्जुषन्जुषमाणोऽपिहेहृषीकप
तेनलिप्यसेत्वयेत्वन्येजीवायोगिनोवात्वत्तःपरिहृतादपि अविद्यमानात्त्यक्ताद्वाविषयजोषणात् बिभ्यतिवासना

त्वत्तःपुमान्समधिगम्ययथास्यवीर्यं धत्तेमहान्तमिवगर्भममोघवीर्यः सोयंतयानुगतआत्मनआ
ण्डकोशं हैमंससर्जबहिरावरणैरुपेतं १६ तत्तस्थुषश्चजगतश्चभवानधीशोयन्माययोत्थगुण
विक्रिययोपनीतान् अर्थान्जुषन्नपिहृषीकपतेनलिप्तो येन्येस्वतःपरिहृतादपिबिभ्यतिस्म १७
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः पत्न्यस्तुषोडशसहस्रमनंग
बाणैर्यस्येन्द्रियंविमथितुंकरणैर्नविभ्व्यः १८ विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याःपादावनेज
सरितःशमलानिहन्तुं आनुश्रवंश्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयंशुचिषदस्तउपस्पृशन्ति १९ ॥

मात्रेणावधीतरत्यर्थः १७ अलिप्तत्वमाह स्मायेति स्मायावलोकः मन्दस्मितविलसितोऽवलोकः तस्यलवःकटाक्षस्ते
नदर्शितोज्ञापितोयोभावोऽभिप्रायस्तेनमनोहारियद्भ्रूमण्डलंतेनप्रहितायेसौरतामन्त्रास्तैःशौण्डैःप्रगल्भैः अनंगबाणैःकाम
स्यबाणैःसंमोहनैःकरणैःकामकलाभिःषोडशसहस्रंपत्न्यःयस्येन्द्रियंमनःविमथितुंक्षोभयितुंनविभ्व्यःनसमर्थाःसम
भान्तलिप्सःस्थितएवैत्यन्वयः १८ तस्मात्तवअमृतरूपायाकथातस्याउदवहन्तीतितथाकीर्तिनद्यःतथापादावनेज
सरितोगंगाद्याःत्रिलोक्याःशमलानिहन्तुंविभ्व्यः केनप्रकारेण आनुश्रवंगुरोरुच्चारणमनुश्रूयतइत्यनुश्रवोवे
दस्तत्रभवंकीर्तिरूपंतीर्थंश्रुतिभिःश्रवणैःद्वितीयं अंघ्रिजंचागसंगैःएवंशुचिषदःस्वाश्रमधर्मस्थितास्तवतीर्थद्वय

विबुधैःसह २० ।।ऽऽ।।२१ ।।ऽऽ।।विदिक्षाविस्तारिता २२ ।।उद्दामानि वृत्तानि विक्रमाणि ये बहूनि कर्माणि २३ २४
२५ २६ २७ २८ वीर्यशौर्ययुक्तया श्रिया २९ उद्वेलेन लंघितमर्यादेन ३० वैकुंठ ख्यां सनातनं भवनं यास्यामि।

शुक उवाच इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिं अभ्यभाषत गोविंदं प्रणम्यांबरमाश्रितः २०
ब्रह्मोवाच भूमेर्भारावतारायपुरा विज्ञापितः प्रभो त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितं २१ ध
र्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा २२ अवतीर्य यदो
र्वंशे बिभ्रद्रूपमनुत्तमं कर्माण्युद्दामवृत्तानि हितायजगतोकृथाः २३ यानि ते चरितानीश मनुष्याः
साधवः कलौ शृण्वंतः कीर्तयंतश्च तरिष्यंत्यंजसा तमः २४ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्त
म शरच्छतं व्यतीयाय पंचविंशाधिकं प्रभो २५ नाधुना तेऽखिलाधार देवकार्यावशेषितं कुलं च वि
प्रशापेन नष्टप्रायमभूदिदं २६ ततः स्वधाम परमं विशस्व यदि मन्यसे सलोकाँल्लोकपालान्नः पा
हि वैकुंठकिंकरान् २७ श्रीभगवानुवाच अवधारितमेतन्मे यदात्थ विबुधेश्वर। कृतं वः कार्यमखि
लं भूमेर्भारोऽवतारितः २८ यदिदं यादवकुलं वीर्यशौर्य श्रियोद्धतं लोकं जिघृक्षद्रुद्धं मे वेलेनेव म
हार्णवः २९ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलं गंतास्म्यनेन लोकोयमुद्वेलेन विनंक्ष्यति ३०
इदानीं नाश आरब्धः कुलस्य द्विजशापजः यास्यामि भवनं ब्रह्मन्नेतदंते तवानघ. ३१ शुक उवा
च इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तं सह देवगणैर्देवः स्वधाम समपद्यत ३२ अथ तस्यां
महोत्पातान् द्वारवत्यां समुत्थितान् विलोक्य भगवानाह यदुवृद्धान्समागतान् ३३ श्रीभगवानुवा
च एते वै सुमहोत्पाता व्युत्तिष्ठंतीह सर्वतः शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ३४ ऽऽ।।

३१ ऽऽ।। ३२ ऽऽ।। ३३ ऽऽ।। ३४ ऽऽ।।

प्रभासं यास्याम इति वृत्तोऽयमभिप्रायः एते देवांशाः स्वाधिकारान्निवर्त्तन्ते इति न तु सद्यो मोहं द्वारवत्यां म्लानामुच्चैरन्तु तस्मा
दस्मुदयफलं प्रभासं नेष्यामीति ३५ दक्षशापाद्यक्ष्मणा गृहीतोऽन्तद्वीपयत्र स्नानमात्रेण कृत्वा किल्बिषात्तस्माद्रोगः

नवस्तव्यमिहास्माभिर्जिजीविषुभिरार्य्यकाः प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव माचिरं ३५ यत्र
स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयं ३६ वयंच
तस्मिन्नाप्लुत्य तर्प्पयित्वा पितॄन्सुरान् भोजयित्वोशिजो विप्रान्नानागुणवतान्धसा ३७ तेषु
दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवं ३८ शुक उवा
च एवं भगवतादिष्टा यादवाः कुरुनन्दन गन्तुं कृतधियस्तीर्थं स्यन्दनान्समयूयुजन् ३९ तन्नि
रीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितं दृष्ट्वारिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ४० उद्धव उवा
च देवदेवेश योगेश पुण्यश्रवणकीर्त्तन संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् विप्रशा
पं समर्थोपि प्रत्यहन्न यदीश्वरः ४२ नाहं तवाङ्घ्रिकमलं क्षणार्द्धमपि केशव त्यक्तुं समुत्सहे ना
थ स्वधाम नय मामपि ४३ तव विक्रीडितं कृष्ण नृणां परममङ्गलं कर्णपीयूषमास्वाद्य त्यजन्त्यन्य
स्पृहां जनः ४४ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु कथं त्वां प्रियमात्मानं वयं भक्तास्त्य
जेमहि ४५ त्वयोपभुक्तस्रग्गन्धवासोलंकारचर्च्चिता उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ४६

स्नात्वा सद्यो विमुक्तः सन् कलावृद्धिं भेजे ३६ उशिजः कमनीयान् अन्धसा अन्नेन ३७ उप्त्वेति यथा सुक्षेत्रे बीजं
सुप्तं बहुफलं भवति तथा दानं सत्पात्रे कृतिर्द्योतयेति ३८ ३९ ४० ४१ लोकं मर्त्यलोकं न प्रत्यहन् न प्रतिहतवान् ४२ ४३
४४ शय्यादिषु त्वा भक्ताः नित्यं सेवितवन्तो वयं कथं त्यजेम ४५ त्यक्तुमशक्नुवन् प्रार्थये न मायाभयादित्याह त्वयेति चर्चिता।

संन्यासिनो हि ब्रह्मचर्यादिक्लेशैः कथंचित्तरंति वयं त्वनायासेनैव तरिष्याम इत्याह वातरशना इति ऊर्द्ध्वमंथिनः। ऊर्द्ध्वरेतसः ४७ तावकैर्भक्तैः सह त्वद्वार्तया ४८ त्वल्लीलापरिहासः ईहितं त्वं ४९ एकांतिनमित्यादि स्वमित्राया ऽवंचने हेतुः ५० इति एकादशे षष्ठोऽध्यायः ६ सप्तमे उद्धवस्यात्मज्ञानसिद्धये हरिः स्वयं अवधूतेतिहासेन गुरु

वातरशना य ऋषयः श्रमणा ऊर्द्ध्वमंथिनः। ब्रह्माख्यं धाम ते यांति शांताः संन्यासिनोऽमलाः ४७ वयं त्विह महायोगिन् भ्रमंतः कर्मवर्त्मसु। त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ४८ स्मरंतः कीर्तयंतस्ते कृतानि गदितानि च। गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडंबनं ४९ शुक उवाच एवं विज्ञापितो राजन्भगवान्देवकीसुतः। एकांतिनं प्रियं भृत्यमुद्धवं समभाषत ५० इति श्रीभा० ए० स० पा० म० वै० षष्ठोऽध्यायः ६ श्रीभगवानुवाच यदात्थ मां महाभाग तच्चिकीर्षितमेव मे। ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकांक्षिणः १ मया निष्पादितं ह्यत्र देवकार्यमशेषतः। यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः २ कुलं वै शापनिर्दग्धं नंक्ष्यत्यन्योन्यविग्रहात्। समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ३ यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमंगलः। भविष्यत्यचिरात्साधो कलिनापि निराकृतः ४ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले। जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ५ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबंधुषु। मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गां ६ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः। नश्वरं गृह्यमाणं च विद्धि मायामनो

हा ५

ष्यतिर

स्वच्छानवर्णायत १ यदात्थ संदिष्टं तत्कृतमिति स्वर्वासं वैकुंठवासं प्रति १ २ त्वं च सर्वत्यागेनात्मनिष्ठो भवेति वक्तुमाह कुलमिति ३ तदेवाह नष्टमंगलो भविष्यति ४ न वस्तव्यमेव त्वया ५ ६ ननु गुणदोषाभ्यां विषमे लोके कुतः समदृष्टिः स्यात् तत्राह यदिदमिति मनआदिभिर्गृह्यमाणं मनोमयात्मनो मायेति विद्धि तदपिन

मनोमयत्वेहेतुः पुंसइति अयुक्तस्यविक्षिप्तमनसः नानार्थोयंभेदविषयोभ्रमः सभ्रमएवगुणदोषभाक् ननुवे
देनैवविधिनिषेधाभ्यांभेदस्यसत्यतोक्तानभ्रमत्वं, इत्यतगुणदोषबुद्धेः पुंसः कर्मविहितंकर्मतल्लोपः विकर्म
निषिद्धमितिभेदः अविद्यावद्विषयएववेदइत्यर्थः ७ कथमात्मनिपरोक्षेविततेजगदीक्षणीयंतत्राह आत्मा
नमिति मयिब्रह्मणितद्रूपेणेक्षस्व ८ नन्वेवंयुक्तचित्तत्वेनकर्माकरणेदेवादयोविघ्नंकरिष्यन्तितत्राह ज्ञाने
ति ज्ञानंवेदतात्पर्यनिश्चयः विज्ञानंतदर्थानुभवस्ताभ्यांसम्यक्युक्तः ततश्चात्मानुभवेनैवतुष्टंचित्तं अतश्श
रीरिणांदेवादीनां आत्मभूतः अन्तरायैर्नप्रतिहन्यसे अयंभावः यावदनुभवंयथाश्रमंकर्माणिकुर्याद्देवतादेर्न

पुंसोऽयुक्तस्यनानार्थोभ्रमःसगुणदोषभाक् कर्माकर्मविकर्मेतिगुणदोषधियोभिदा
८ तस्माद्युक्तेन्द्रियग्रामोयुक्तचित्तइदंजगत् आत्मनीक्षस्वविततमात्मानंमय्यधी
श्वरे ९ ज्ञानविज्ञानसंयुक्तआत्मभूतःशरीरिणां आत्मानुभवतुष्टात्मानान्तरायैर्विह
न्यसे १० दोषबुद्ध्योभयातीतोनिषेधान्ननिवर्तते गुणबुद्ध्याचविहितंनकरोतियथा
र्भकः ११ सर्वभूतसुहृच्छान्तोज्ञानविज्ञाननिश्चयः पश्यन्मदात्मकंविश्वंनविपद्येतवै
पुनः १२ श्रीशुकउवाच इत्यादिष्टोभगवतामहाभागवतोनृप उद्धवःप्रणिपत्याहतत्वजि ज्ञा

तरं सर्वेषामात्मभूतत्वात्कोऽपिविघ्नंनाचरति तथाचश्रुतिः तस्यहनदेवाश्चनाभूत्या ईशतेआ
त्माह्येषांसभवतीति ९ नचोत्पन्नज्ञानस्यापियथेष्टाचरणप्रसंग इत्याह दोषबुद्ध्येति गुणदोष
बुद्ध्यतीतोऽपिप्राक्तनसंस्कारान्निषेधान्निवर्ततएव किंतुनदोषबुद्ध्या विहितंचयथायथः करोतिन
गुणबुद्ध्यायथाऽर्भकः सकलविकल्परहितः किंचित्करोतिकुतश्चिन्निवर्ततेतद्वत् ११ सर्वभूतसुहृत्
एवंभूतस्यनपुनःसंसारइत्याह सर्वभूतेति नविपद्येतनपुनःसंसरेत् १२ १३ रामरामरामराम

त्वं तु सर्वं परित्यज्येत्याद्युपदेशमात्मनो योग्यं मन्वानः पृच्छति योगेशेति योगफलदायिन् योगविन्यास न्यासो नामाति
गोप्यान्निक्षेपविशेषः यद्वा योगो विन्यस्यते क्रियते यस्मिन् योगात्मन् योगे आत्मा प्रकटो भवति यस्य योगसंभव योगस्य
संभवो यस्मात् चतुर्भिरेतैः संबोधनैः स्वमहिम्ना केवलं त्वयोपदिष्टं न तु मदधिष्ठाकारं पर्याप्तोऽस्मीति द्योतितं तदाह निः
श्रेयसायेति न चारोग्याद्यर्थं सर्वस्वदानादिवदयं त्यागः किं तु संन्यासलक्षणः आप्रत्यापत्तिरूपः १४ १५ यं प्रति त्यागाद्यु
पदिष्टं सोऽहं मूढमतिः कुत्र ममेति अहमिति च सानुबंधे पुत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे विगाढो निमग्नः अतः

उद्धव उवाच योगेश योगविन्यास योगात्मन् योगसंभव निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः १४ त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः १५ सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबंधे तत्त्वंजसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यं १६ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः १७ तस्माद्भवंतमनवद्यमनंतपारं सर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यं निर्विण्णधीरहमु हे वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये १८

तत्तु भवता निगदितं यथाहमंजसा संसाधयामि तथा भृत्यं मामनुशाधि शनैः शिक्षय १६
मया संक्षेपत उक्तं विस्तरतस्त्वन्यान्पृच्छेति चेत् अत आह सत्यस्येति स्वदृशः स्वप्रकाशस्य सत्यस्यात्मनः आत्मनो मां प्र
ति वक्तारं त्वत्तः अन्यं नानुचक्षे न पश्यामि स्वदृशः स्वतः सिद्धज्ञानात् त्वत्तोऽन्यमिति वा कुतः त्वत्त आह सर्व इति ब
हिरर्थभावा विषयेष्वर्थबुद्धयः १७ केचित् दुःशीला भवंति केचित्सेविताः फलकाले विनश्यंति केचिदज्ञाः केचि
दुत्तमाः समर्थाः केचित्तु स्थानभ्रष्टाः तद्वा च त्वं तु अनवद्यमित्यादीनि पंच विशेषणानि न अंतकालतः पारं दे
शतश्च यस्य तं कालादिभिरकुंठो विकुंठलोको धिष्ण्यं स्थानं यस्य तं उ हे भगवन् हस्फुटं निर्वेदे हेतुः वृजिनैर्दुःखैरभि
तप्तः हकारगौरवाय वकारो युक्तः पठनीयः नन्वनवद्यत्वादीनि कुतः मम तत्राह नारायणमिति अनुकंपितामा

तदेवमसंभावनाविपरीतभावनाभ्यामुपदिष्टं तत्त्वमनवगाहमानं प्रति तन्निवृत्तये गुरूपदेशं विनाऽपि स्वान्वय
व्यतिरेकाभ्यामेव तत्त्वप्रतीतिर्भवतीति दर्शयितुमाह प्रायेणेति लोकतत्त्वविचक्षणाः पटीतकाः अशुभाशयात् विषयवा
सनातः १९ [illegible]दयति आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहितज्ञानगुरुः २० तत्र प्रत्यक्षं दर्शयति पुरुषत्वे
चेति तथा च श्रुतिः पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञानं वदति विज्ञातं पश्यति वेद श्वस्त
नं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानमिति २१ अतः।
पुरुषत्वं स्तौति एकेति २२ अनुमानमाह अत्रेति अत्र पौरुष्यां पुरि युक्ता अप्रमत्ता अग्राह्यं ग्राह्येभ्योऽहंकारादिभ्यो

श्रीभगवानुवाच प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः समुद्धरन्ति ह्यात्मानमात्मनैवाशु
भाशयात् १९ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते
२० पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितं २१ एकद्वि
त्रिचतुष्पादो बहुपादस्तथापदः बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया २२ अत्र मां मार्गयन्त्य
द्धा युक्ता हेतुभिरीश्वरं गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः २३ अत्राप्युदाहरन्तीममितिहा
सं पुरातनं अवधूतस्य संवादं यदोरमिततेजसः २४ अवधूतं द्विजं कंचिच्चरन्तमकुतोभयं।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् २५ ॥

तिरिक्तं मां अद्धा साक्षान्मार्गयन्ति मार्गणप्रकारमु
यमाह गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानां प्रकाशः स्वप्रकाशमेकं विना न घटत इति अनुपपत्तिमुखे
न लक्षकैः तथाभिरेव लिङ्गैः व्याप्तिमुखेनानुमानतः ईश्वरं प्रवर्तकं मार्गयन्ते बुद्ध्यादिकरणानि कर्तृप्रयो
ज्यानि करणत्वाद्वास्यादिवदिति तदुक्तं भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः दृश्यैर्बुद्ध्यादिभिर्द्रष्टा
लक्षणैरनुमापकैरिति न चैतावता आनुमानिक आत्मेति मन्तव्यं देहादिव्यतिरिक्तत्वपदार्थशुद्धिमात्रस्यै
वानुमानेन विवक्षितत्वात् २३ स्वयोऽन्वयव्यतिरेकाभ्यां असंभावनादिनिवृत्तावितिहासमाह अत्रापीति २४

विशारदा अतिनिपुणा २६ सर्वलोकवैलक्षण्यमेवाह प्रायश इति धर्मादिषु विविसायां आत्मविचारेच मानवाः समीहं
ते प्रवर्त्तते तत्रापि आयुरादि हेतु वैलक्षण्यमेवाह प्राय इति धर्मादिषु विविसायां तु नाकाम नयैव २७ त्वं तु न कस्य चिल्के
मेण: कर्त्ता भवसि न च किंचिदीहसे छ्सि न त्वं शक्तया वा अज्ञानेन वा नैपुण्येन वा विरूपत्वेन वा अर्वाच्मितया वा।
उदासि नम्यथ यहत्त एवेत्याह कल्पः समर्थोदिना २८ महानालेन दह्यमाने वक्तन्यान्ति प्रच्छति जनेष्विति २९ स्पर्शविहीनस्य।

यदुरुवाच कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा यामासाद्य भवांल्लोकं विद्वांश्चरति बालव
त् २६ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः हेतुनैव समीहंते आयुषो यशसः श्रियः २७
त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः न कर्त्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् २८ जने
षु दह्यमानेषु कामलोभदवाग्निना न तप्यसेऽग्निना मुक्तो गंगांभस्थ इव द्विपः २९ त्वं हि नः पृच्छ
तां ब्रह्मन्नात्मन्यानन्दकारणं ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ३० श्रीभगवानुवाच यदु
नैवं महाभागो ब्रह्मण्येन सुमेधसा पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ३१ ब्राह्मण उवाच सं
ति मे गुरवो राजन्बहवो बुद्ध्युपाश्रिताः यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ३२ पृथिवी वा
युराकाशमापोऽग्निश्चंद्रमा रविः कपोतोऽजगरः सिंधुः पतंगो मधुकृद्गजः ३३ मधुहा हरिणो मी
नः पिंगला कुररोऽर्भकः कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ३४ एते मे गुरवो राजंश्चतु
र्विंशतिराश्रिताः शिक्षा वृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ३५ यतो यदनुशिक्षामि यथा वा
नाहुषात्मज तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ३६

विषयभोगरहितस्य अत्र हेतुः केवलात्मनः।
कलत्रादिशून्यस्य ३० ३१ बुद्ध्यैवोपाश्रिताः स्वीकृतान तूपदेशेन अटामि वयं यटामि ३२ ३३ शोभनरूपकौ
शस्य करोतीति सुपेशकृत् ३४ मेमया आश्रितास्तत्राह एतेषां वृत्तिभिः आत्मनः शिक्षा: शिक्षितो यानर्थानहं
यथा यथादीन अन्वशिक्षं अनुशिक्षितवानस्मि ३५ नाहुषो ययातिः ३६ ८।७। ७म:

क्षितेः क्षमां शिक्षितवानित्याह भूतैरिति आक्रम्यमाणोपीड्यमानः तद्विद्वान् भूतानां दैववशवर्तित्वं विद्वान् व्रतं नि
यमं ३७ पर्वतरूपात् वृक्षरूपाच्च पार्थिवात्तस्याः शिक्षितमाह शश्वदिति सर्वदा परार्थाः परोपकारार्थाः सर्वा
ईहा यस्य सः परार्थ एवैकांतः संभवो यस्य सः भूभृतः पर्वतात् तस्य हि तृणजलनिर्झरप्रसवक्रियाः परार्था ए
व यथा तद्वत् तथा नगशिष्यः वृक्षशिष्यः सन् परात्मतां पराधीनात्मतां वृक्षो यथा परैः खंडयमानोप्यवाने
पनमप्यनुमन्यते तद्वत् ३८ वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणस्य गुणमाह प्राणवृत्त्येति प्राणो यथाहारं
हिमात्रेण प्रवर्तते न रूपरसादीनिंद्रियविषयानपेक्षते तथा मुनिरपि भवेदित्यर्थः प्राणवृत्तेरकरणे मनोवै

भूतैराक्रम्यमाणोपिधीरोदैववशानुगैः तद्विद्वान्नचलेन्मार्गादन्वशिक्षंक्षितेर्व्रतं ३७
शश्वत्परार्थसर्वेहः परार्थैकांतसंभवः साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मतां ३८
प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेंद्रियप्रियैः ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ३९ ।
विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ४०
पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः गुणैर्न युज्यते योगी गंधैर्वायुरिवात्मदृक् ४१

कल्येन ज्ञाननाशः स्यात् अतो देहनिर्वाहः कर्तव्यः गुणलिप्सायां तु वाक् मनश्च विक्षिप्येते अतो नाधि
कं लिप्सेदित्याह ज्ञानमिति नावकीर्येत न विक्षिप्येत ३९ विषयान्सेवमानोपि तेष्वनासक्तिं बाह्यवायोः शि
क्षितेत्याह विषयेष्विति नानाधर्मेषु शीतोष्णादिधर्मकेषु नहि वायुर्वनदहनेवासज्जते तद्वत् ४० यथा वा
युर्गंधादिधर्मयोगेन प्रतीयमानोपि वस्तुतो न तद्योगी एवं देहादिधर्मयोगेन प्रतीयमानोप्यात्मा न तद्धर्म
वानिति संभावितमिति वायोरेव शिक्षितमित्याह पार्थिवेष्विति ४१॥ रामः रामः रामः रामः

आकाशाच्छिक्षितं संभावनाद्वयमाह अंतर्हित इति देहांतर्गतोपि मुनिरात्मनो देहाद्यसंगं अत एवाव्यवच्छेदं च भावयेत्
कुतः स्थिरजंगमेषु समन्वयेन व्याप्त्या अंतर्हिततया किंनिमित्तः ब्रह्मस्य एव व्याप्तिः न वितततस्य सर्वगतस्य तत्कुतः ब्रह्मात्मभावे
न ब्रह्मस्वरूपभावेन तत्त्वमसीति श्रुतेः नन्वेतत्सर्वं कथं संभवति तत्राह नभस्त्वं ततस्तुल्यत्वं संभावयेत् यथा नभ
सः सर्वगतस्य न घटादिभिः संगः परिच्छेदो वा एवमात्मनोपि संभवतीति ४२ किंच कूटस्थस्यात्मनो नागमापायिदे
हादिसंबंधः इत्याह तेजोबन्नमयैः तेजश्च आपश्च अन्नं पृथिवी च तन्मयैः कालसृष्टैर्गुणैर्देहादिभिः पुमान् संस्पृ
श्यते इति नभोवत्संभवतीति ४३ स्वच्छत्वादिभिर्गुणैः उदकं जगद्गुरुं नामीति तद्गुणाः यथा शिक्षिता इत्याह स्वच्छः निर्मलः

अंतर्हितश्च स्थिरजंगमेषु ब्रह्मात्मभावेन समन्वयेन व्याप्त्याव्यवच्छेदमसंगमात्मनो मुनि
र्नभस्त्वं विततस्य भावयेत् ४२ तेजोबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः न स्पृश्यते नभस्तद्वत्काल= ५२
सृष्टैर्गुणैः पुमान् ४३ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणां मुनिः पुनात्यपां मित्रमी=
क्षोपस्पर्शकीर्त्तनैः ४४ तेजस्वी तपसा दीप्तो दुर्द्धर्षोदरभाजनः सर्वभक्ष्योपि युक्तात्मा नाद
त्ते मलमग्निवत् ४५ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छतां भुंक्ते सर्वत्र दातॄणां
दहन्प्रागुत्तराशुभं ४६ ॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः प्रविष्ट ईयते तत्तत्स्वरूपोग्निरिवैधसि

प्रकृतितः स्वभावतः स्निग्धः धनेष्वनुरागवान् माधुर्यः मधुरालापी त्वर्थ।
तीर्थ भूः तीर्थस्थानं अपां मित्रं उदकतुल्यः अपात्यादितिपाठे सर्वान्पापात्पुनातीति स्वच्छत्वादिगुणैर्यथोदकं तादृश एव ज्ञा
तव्य ४४ अग्नेः शिक्षितमाह तेजस्वीति तेजस्वीति तेजस्वी ज्ञानातिशयात् विशेषतस्तपसा दीप्तः दुर्धर्षः अनभिभाव्यः
स चासावुदरभाजनश्च अपरिग्रहः युक्तात्मा मुनिः ४५ अग्नेरेव शिक्षांतरमाह क्वचिदिति यथाग्निः परो
यैव हविर्गृह्णाति तथा मुनिरित्याह दातॄणामिति प्रागुत्तराशुभं भूतं भविष्यच्च पापं ४६ आत्मनो देहोपा
धिकमेवोच्चनीचत्वादि न स्वाभाविकमित्यग्निदृष्टांतेन संभावितमित्याह स्वमाययेति स्वमायया सृष्टं सद
सल्लक्षणं देवतिर्यगादिरूपं विप्रशूद्रादिरूपं वा ४७ रामः रामः रामः रामः

आत्म जन्मादिषड्विकाराभावेऽप्य दृष्टांतेन संभावित इत्याह विसर्गाद्या इति विसर्गो जन्म श्मशानं नाशः तत्रे
यं ज्योतिषशास्त्रप्रक्रिया आप्यमंडलं चंद्रः तेजोमयमंडलमादित्यः तयोरेकनक्षत्रावस्थाने चंद्रो न दृश्यते च
न्द्रुष आदित्यमंडलेन समदेशावस्थितत्व्यवधानात् सा अमावस्या अथ षष्टिघटिकाभिरंशेन नक्षत्रांतरंग
च्छति आदित्यस्तु त्रयोदशभिरहोरात्रैः अतः प्रतिपदमारभ्य विषमस्थितस्य आदित्यमंडलस्य पंचदशः पंच
दशो भाग आप्यमंडले प्रतिबिंबितो दृश्यते सा कलेत्युच्यते एवं पंचदशद्वित्रयोदशभिर्नक्षत्रैरंतरमिति राशिचक्र
स्य सप्त[illegible]विंशतिनक्षत्रात्मकस्य मध्ये संमुखौ चंद्रादित्यौ स्थितौ ततः तदा संपूर्णप्रतिबिंबं स्वच्छायालांछितं दृश्य
ते सा पूर्णिमा तस्याममावस्याप्रतिबिंबेन सह षोडशकलश्चंद्रः उपचर्यते ततः पुनः प्रतिपदमारभ्य मंडलयोर्विष

विसर्गाद्याः श्मशानांता भावा देहस्य नात्मनः कलानामिव चंद्रस्य कालेनाव्यक्तवर्त्म
ना ४८ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चि
षां ४९ गुणैर्गुणानुपादत्ते यथाकालं विमुंचति न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ५०
बुध्यते स्वे न भेदेन व्यक्तिस्थ इव तद्गतः लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ५१



मभावात् कलाह्रासः तत्र[illegible] यथा कलानामेवोत्पत्त्यादयो नाप्यमंडलस्य तथात्मनोऽपीत्याह कलानामिवेति।
४८ सिंहावलोकनेनाग्निदृष्टांतेनैव देहानामुत्पत्त्यादि उक्तं वैराग्यप्रतिपादितमित्याह कालेनेति ओघवेगोपमेन।
आत्मनः संबंधिनां देहानामित्यर्थः अर्चिषां ज्वालानां ४९ आदित्याच्छिन्नमाह इत्येन गुणैर्गोभिरिति गुणैरिंद्रि
यैर्गुणान्विषयानुपादत्ते यथाकाले अर्थिन्यागते सति विमुंचति च न तेषु युज्यते लब्धमिति वाऽभिनिवेशं करोति
गोभिः रश्मिभिः गाः जलानि गोपतिः सूर्यो यथा ५० स्वतो भेदेऽप्यस्याप्यात्मनो भेदप्रतीतिरुपाधिवशादित्यादि
त्यदृष्टांतेनैव संभावितमित्याह बुध्यत इति स्वे स्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते अभिव्यनक्तीति व्यक्तिरुपाधिः
व्यक्तिस्थः उपाधौ प्रतिबिंबितस्तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते अर्कवदित्यन्वयः ५१

कपोताच्छिद्दिसमाह नातिस्नेह इति स्नेहः प्रीतिः प्रसंगः उपलालनाद्याशक्तिः ५२ दृष्टांतं प्रपंचयति कपोतः
कश्चनेति ५३ तयोर्मिथः स्नेहप्रसंगं दर्शयति कपोताविति त्रयेण स्नेहेन गुणिते निबद्धे हृदये ययोस्तौ ५४
विस्रब्धौ निःशंकौ ५५ सा कपोती तर्पयंती सहासवीक्षितालापादिभिः प्रीणयंती अत एव तेनानुकंपिता स

नातिस्नेहः प्रसंगो वा कर्तव्यः क्वापि केनचित् कुर्वन्विंदेत संतापं कपोत इव दीनधीः ५२
कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ कपोत्या भार्यया सार्द्धमुवास कतिचित्समाः ५३
कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ दृष्टिं दृष्ट्यांगमंगेन बुद्धिं बुद्ध्या बबंधतुः ५४ श
य्यासनाटनस्थानवार्त्ताक्रीडाशनादिकं मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ५५ यं यं वां
छति सा राजन्तर्पयंत्यनुकंपिता तं तं समनयत्कामं कृच्छ्रेणाप्यजितेंद्रियः ५६ कपोती
प्रथमं गर्भं गृह्णंती काल आगते अंडानि सुषुवे नीडे स्वपत्युः संनिधौ सती ५७ तेषु काले
व्यजायंत रचितावयवा हरेः शक्तिभिर्दुर्विभाव्याभिः कोमलांगतनूरुहाः ५८ प्रजाः पु
पुषतुः प्रीतौ दंपती पुत्रवत्सलौ शृण्वंतौ कूजितं तासां निर्वृतौ कलभाषितैः ५९ ता
सां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ६० स्ने
हेनबद्धहृदयावन्योन्यं विष्णुमायया विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ६१

तौ यं यं वांछति तं तं कामं समनयत् संपादयामास राजन्निति त्वं यथोक्तं स्मर चित्तं ५६ ॥ ५७ तेषु अंडेषु
केषु हरेः स्वभावकर्मादिशक्तिभिः रचितावयवाः पक्षिणः कोमलान्यंगानि तनूरुहोश्च येषां ते ५८ ॥ ५९
पतत्रैः पक्षैः अदीनानां तेषां ६० शिशून्बालान् प्रजाः पुत्रान् ६१ ॥ ॥ ॥ ॥

६२ स्वालयांतिके चरतः क्रीडतः तान् कपोतपुत्रान् तान् तत्प्रसार्य ६३ उत्सुकत्वादेव चतत्पोषणार्थं गतौ।
पोषणं भक्ष्य ६४ ६५ शिचा जालेन ६६ आत्मनु रूपां भार्यां विललाप अशोच ६७ विलापमाह त्रयेण अहो
इति अतृप्तस्य सुखे अकृतार्थस्य अहृष्टम संपादयतः ६८ ६९ ७० तानावृतान्पश्यन्नपि शिक्षु जाले।

एकदा जग्मतुस्तासामन्नार्थं तौ कुटुंबिनौ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरं ६२
दृष्ट्वा तान् लुब्धकः कश्चिद्यदृच्छातो वने चरः जगृहे जालमातत्य चरतः स्वालयांतिके ६३
कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ६४ क
पोती स्वात्मजान्वीक्ष्य बालकान् जालसंवृतान् तानभ्यधावत्क्रोशंती क्रोशतो भृशदुः।
खिता ६५ सासकृत्स्नेहगुणिता दीनचित्ताऽजमायया स्वयं चाबध्यत शिचा बद्धान् पश्यं
त्यपस्मृतिः ६६ कपोतश्चात्मजान्बद्धानात्मनोप्यधिकान्प्रियान् भार्यां चात्मसमां दीनो
विललापातिदुःखितः ६७ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः अतृप्तस्याकृतार्थस्य
गृहस्त्रैवर्गिको हतः ६८ अनुरूपानुकूला च यस्य मे पतिदेवता शून्ये गृहे मां संत्यज्य पु
त्रैः स्वर्याति साधुभिः ६९ सोहं शून्ये गृहे दीनो मृतदारो मृतप्रजः जिजीविषे किमर्थं वा
विधुरो दुःखजीवितः ७० तांस्तथैवावृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः स्वयं च कृ
पणः शिक्षु पश्यन्नप्यबुधोऽपतत् ७१ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनं ७
कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहं ७२ एवं कुटुंब्यशांतात्मा द्वंद्वारामः पतत्रिव
त् पुष्णन्कुटुंबं कृपणः सानुबंधोवसीदति ७३॥

ब ७१ ॥७२ दार्ष्टांतिके योजयति एवमिति ७३॥

रामः

एवं गृहाशक्ति स्तिरश्चामप्यनर्थहेतुः मानुष्यस्य त्वतिनिंदितेत्याह यः प्राप्येति ७४ इति एकादशे सप्तमः ॥ अष्टमेऽजगरा
दिभ्यो नवभ्यः शिक्षितं हरिः अवधूतगिराहाह विवेकायोद्धवं प्रति १ प्रारब्धकर्मभोग्यस्यावश्यंभावित्वात्तदर्थमुद्यमेनोद्यु
क्त्येयो व्याकर्तव्य इति अजगराच्छिक्षितमित्याह सुखमित्यादिना। यदैंद्रिकं सुखं तत्स्वर्गे नरके च भवत्येव यथा दुःखं तस्मा
द्बुधस्तन्नेच्छेत १ शरीरनिर्वाहमात्रं तु यद्यप्यालस्येन कर्तव्यमित्याह ग्रासमिति आजगरः अजगरवृत्तिः अक्रिय उदासीनः २
यदा नायाति तदा निराहारः किं कर्तव्यं तत्राह शयीतेति अनुपक्रमः निरुद्यमः दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान् ३ ननु सम

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतं गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ७४ इति श्रीभाग
वते म० पु० ए० स० सप्तमोऽध्यायः ७ ब्राह्मण उवाच सुखमैंद्रियकं राजन्स्वर्गे नरक एव च देहि
नां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः १ ग्रासं सुमृष्टं विरसं महांतं स्तोकमेव वा यदृच्छयैवापति
तं ग्रसेदाजगरोऽक्रियः २ शयीताहानि भूरीणि निराहारोऽनुपक्रमः यदि नोपनमेद्ग्रासो मह
हिरिव दिष्टभुक् ३ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकं शयानो वीतनिद्रश्च नेहेतेंद्रियवान
पि ४ मुनिः प्रसन्नगंभीरो दुर्विगाह्यो दुरत्ययः अनंतपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ५

भ्योऽपि शयीतैव किंतु ओमित्याह ओज इति ओजः इंद्रियबलं सहो मनोबलं शारीरमेव तद्युक्तमपि देहमकर्मकमेव बि
भ्रत् शयान एव भवेत् वीतनिद्रः स्वार्थे दत्तदृष्टिश्च भवेत् न पुनरीहेत इंद्रियवानपीति दर्शनादिव्यापारमपि निवा
रयति ४ समुद्राच्छिक्षितमाह मुनिरिति बहिः प्रसन्नश्चासौ अंतर्गंभीरश्च दुर्विगाह्यः एवंभूत इति परैः कल्पयितुम
शक्यः अलब्ध्याभिप्रायत्वात् दुरत्ययः अनतिक्रमणीयः तेजस्वित्वात् अनंतपारः कालतो देशतश्चापरिच्छेद्य
स्वरूपाविर्भावात् अक्षोभ्यः अविकार्यः रागाद्यभावात् स्तिमितोदः निश्चलोदकोऽर्णवो यथा तद्वदेतैर्गुणैर्भ
वेदित्यर्थः ५ ॥ रामः रामः रामः ॥

एतच्छिक्षणीति सायंतनमिति १२ स्पर्शाशक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह पदापीति पादेनापि दारवीं दार
मयीं गजो हि करिणीमवस्पृश्य निरवोन्येन तां पिहितगर्ते निपात्य बध्यते १३ किंच नाधिगच्छेदिति नोपगच्छेत् १४ सो
गभोगविहीनो धनसंचयः परिग्रहो भवत्यतो मधुहा गुरुरित्याह नदेयमिति तदन्यो बलवान्भुंक्ते तस्याप्यन्यस्तच्चान्यः।
मधुहा मक्षिकाभिः संचितं मधु यथा भुंक्ते तद्वत् ननु स्वगुप्तं धनं कथमन्यो ज्ञास्यति हरिष्यति चेति तत्राह अर्थविदिति ।
लिंगैरर्थं तद्गुप्तस्थानं च वेत्तीत्यर्थविद् यथा मधुहा तरुकोटरादिगतं मधु वेत्ति हरति च १५ स्वोद्यमं विना उपभोगः संभ

सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः मक्षिका इव संगृह्णन् सह तेन विनश्यति १२ पदापि
युवतीं भिक्षुर्न स्पृशेद्दारवीमपि स्पृशन्करीव बध्येत करिण्या अंगसंगतः १३ नाधिगच्छेत्स्त्रि
यं प्राज्ञः कर्हिचिन्मृत्युमात्मनः बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा १४ न देयं नोपभो
ग्यं च लुब्धैर्यद्दुःखसंचितं भुंक्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु १५ सुदुःखोपार्जितैर्वि
त्तैराशासानां गृहाशिषः मधुहेवाग्रतो भुंक्ते यतिर्वै गृहमेधिनां १६ ग्राम्यगीतं न शृणुयाद्य
तिर्वनचरः क्वचित् शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् १७ नृत्यवादित्रगीतानि जुष
न्ग्राम्याणि योषितां आसां क्रीडनको वश्य ऋष्यशृंगो मृगीसुतः १८ जिह्वयातिप्रमाथि।
न्या जनो रसविमोहितः मृत्युमिच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा १९

वतीत्यत्रापि स एव गुरुरित्याह।
दुःखेति आशासानामिति वक्तव्ये वर्णलोप आर्षः यतिर्ब्रह्मचारी च पक्वान्नस्वामिनावुभौ तयोरन्नं दत्त्वानुभुक्त्वा
चांद्रायणं चरेदिति गृहिणामावश्यकत्वेन दानविधानात् १६ हरिणाच्छिक्षितमाह ग्राम्येति भगवद्गीतं न शृणुया
देवं मृगयोर्लुब्धकस्य १७ हरिणाशब्दाद्देवं हरिणीसुत ऋष्यशृंगो योषिद्गुरुर्ज्ञातव्य इत्याह नृत्येति वश्योऽभवदिति शेषः
१८ रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह जिह्वयेति अतिप्रमाथिन्या अतिक्षोभिकया अतिदुर्जयया ऋच्छति प्रा
प्नोति बडिशैः आमिषगलितैर्लोहकंटकैः १९ ॥ ॥ ॥

दुर्जयत्वमुपपादयति इंद्रियाणीति द्वाभ्यां अयंभावः यद्याहारस्त्यज्यते तर्हि सर्वेंद्रियजयः केवलं भवति रसनेंद्रियं वर्द्धते यदि तु भुज्यते तर्हि पुनस्तु रसासक्त्या सर्वेंद्रियक्षोभः स्यात् अतो रसासक्तिं परित्यज्यौषधवद्भुंजीतेति प्राणा। व स्यैव संतुष्ट्यर्थमित्यत्रोक्तं यदि रसनस्याति दुर्जयत्वं ज्ञायमायोच्यत इति शेषः २० २१ पिंगलाया नैराश्यं शिक्षितमिति वृत्तांतमाह पिंगलेत्यादिना मे मया शिक्षितं २२ स्वैरिणी कामचारिणी संकेते रतिस्थाने २३ तान्वित्तवतः। सधनान् अतएव शुल्कदान् मुल्यदान् कांतान् सुरतार्हान् २४ अपिसंभावनायां अन्योऽपि मामुपैष्यतीत्येवं दुरा पे५

इंद्रियाणि जयंत्याशु निराहारा मनीषिणः वर्जयित्वा तु रसनं तन्निरन्नस्य वर्द्धते २० तावज्जितेंद्रियो न स्याद्विजितान्येंद्रियः पुमान् न जयेद्रसनं यावज्जितं सर्वं जिते रसे २१ पिंगला नाम वेश्यासीद्विदेहनगरे पुरा तस्या मे शिक्षितं किंचिन्निबोध नृपनंदन २२ सा स्वैरिण्येकदा कांतं संकेत उपनेष्यती अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमं २३ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ तान्शुल्कदान्वित्तवतः कांतान्मेनेऽर्थकामुका २४ आगतेष्वपयातेषु सा संकेतोपजीविनी अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः २५ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलंबती निर्गच्छंती प्रविशती निशीथं समपद्यत २६ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः निर्वेदः परमो जज्ञे चिंताहेतुः सुखावहः २७ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम २७ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः २८ न ह्यंगाजातनिर्वेदो देहबंधं जिहासति यथा विज्ञानरहितो मनुजो ममतां नृप २८॥ न२

शयेत्युत्तरेणान्वयः २५ द्वार्यवलंबमाना पुनः प्रविशति पुनर्निर्गच्छति एवं कुर्वती निशीथं अर्द्धरात्रं प्राप २६ निर्वेद अलंबुद्धिः चिंतचिंतैव हेतुर्यस्य सः यथा यथावत् मम मतः शृणु। २७ ननु किं निर्विण्णया गीतं श्रवणेन तत्राह हि यस्मात्पुरुषस्याशापाशानां निर्वेदोऽसिः यथा तत्पाच्छेत्ता तत्र हेतुः नहीति अंग हे राजन् २८ रामः रामः रामः ॥ 

अविजितात्मेहेतुः याहं बालिशा विवेकशून्यात्स्याः कुतः केन कारेन असतः तुच्छान्नरात्कामं कामये २९ बालिशत्वं प्रपंचयति संतमिति चतुर्भिः समीपे सन्तं अन्तर्यामित्वात् रमं अपरोक्षमीश्वरं ३० अतिविगर्ह्या विनिन्द्या वार्ता जीविका तया कुतः सांकेत्यत्वेन पावृत्ति स्तया नहुव्रीहिणा स्वविशेषणं वा परितापं प्रपंचयति स्त्रैणादिति स्त्रीलंपटात् लुब्धात् अतएवानुशोच्यान्नरात् याहं वित्तं रतिं चेच्छतीं तया व्यात्मा परितापितः केन वित्तमिच्छतीतेन नरेण क्रीतेन स्वयं विक्रीतेनात्मना देहेन ३१ अहो धिक् मायाः हमतिविभ्रमितं भजामीत्याह यदिति वंशो नामस्थूणा सुनिहित

पिंगलाउवाच अहो मे मोहविततिं पश्यताविजितात्मनः या कान्तादसतः कामं कामये येन बालिशा २९ संतं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ३० अहो मयात्मा परितापितो वृथा सांकेत्यवृत्त्यातिविगर्ह्यवार्तया स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ३१ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धं क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ३२ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः यान्यमिच्छत्यसत्यस्मादात्मदात्काममच्युतात् ३३ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणां तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ३४ कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ३५ ॥

स्थूर्यं स्थूणाः वंश्यास्तस्मिन्नुभयतो निहिता वेणवः अस्थिभिरेव निर्मिता वंशास्थ्याप्यस्मिन् तत् तत्र पृष्ठे दीर्घमस्थियत्स वंशः पार्श्वास्थीनि वंश्यानि स्थूणा हस्तपादास्थीनि तत्पाल्वचा रोमभिर्नखैश्च पिनद्धं छादितं तत्पापि द्वारं तिनवद्वाराणि यस्मिन् तत् एवं भूतागाररूपेन शरीरमेतत् मत्तोऽन्या का वा कान्तबुद्ध्या उपैति सेवते ३२ सत्संगो तो सत्यामप्यहो ममहत्याह विदेहानामिति याहमसती अच्युतादन्यं काममभागमिच्छती सा ३३ एवं निर्विण्णा सती अतः परमेवं करिष्यामीत्याह सुहृदिति अयमीश्वरः आत्मनैव आत्मानमेव निवेद्य तं विक्रीय पविशेषेण क्रीत्वा अनेन सह रमे रमा लक्ष्मीर्यथा ३४ अन्यस्मात्तेऽन्यत्वं दर्शयति कियदिति आद्यन्तवन्तो ये कामाः विषयाः कामदा नरा वा देवा वा कालेना

एवं निश्चित्य स्वभाग्यमभिनंदति नूनमिति दुष्टा आशा यस्यास्तस्या मे ३६ ननु धनाप्राप्त्या क्लिष्टायाः कथं विष्णुः
प्रीतस्तत्राह मैवमिति मंदभाग्यायाश्चेदहं स्यां तर्ह्येव निर्वेदहेतवः क्लेशा न स्युरित्यर्थः येन निर्वेदेन अनुबंधं गृहादिकं
निर्हृत्य परित्यज्य ३७ अतः तेन श्रीविष्णुना उपकृतमुपकारं निर्वेदलक्षणं ग्राम्येषु नरेषु विषयेषु वा संगताः ३८ कं।
यं व्रजसि तत्राह संतुष्टेति ३९ ननु त्वादृशीं हित्वा अमुनैव निकोऽपि नियमः तत्राह संसारेति मुषितेक्षणं अपहृतविवेकं
४० तर्हि किमात्मत्राणोपाधिना भजिष्यसि न तत्र सर्वतो निर्विद्य भगवद्भजनेन चक्रे तस्यास्स्वेनैव समर्पयत्वादित्याह

नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ३६
मैवं स्युर्मंदभाग्यायाः क्लेशा निर्वेदहेतवः येनानुबंधं निर्हृत्य पुरुषः शममृच्छति ३७ तेनोप-
कृतमादाय शिरसा ग्राम्यसंगताः त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरं ३८ संतुष्टा श्र-
द्दधत्येतद्यथालाभेन जीवती विहराम्यमुनैवाहमात्मना रमणेन वै ३९ संसारकूपे पतितं
विषयैर्मुषितेक्षणं ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ४० आत्मैव ह्यात्मनो गो-
प्ता निर्विद्येत यदाखिलात् अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ४१ ब्राह्मण उवाच ए-
वं व्यवसितमतिर्दुराशां कांततर्षजां छित्त्वोपशममास्थाय शय्यामुपविवेश सा ४२ आशा हि
परमं दुःखं नैराश्यं परमं सुखं यथा संछिद्य कांताशां सुखं सुष्वाप पिंगला ४३ इति श्री
भा०ए०या० अष्टमोऽध्यायः ८ ॥

आत्मैवेति यदा एवं जगत्पश्येत्तदा अप्रमत्तः सन् निखिलान्
इहामुत्रभोगान्निर्विद्येत तदा हि आत्मैवात्मनो गोप्तेत्यन्वयः अतः केवलं प्रेम्णैव भजामीति भावः ४१ कांत-
स्य तर्षोऽभिलाषस्ततो जातां ४२ फलितमाह आशा हीति ४३ इत्येकादशेऽष्टमः ८॥ नवमे कुररादिभ्यो
देहतश्चापि शिक्षितं स्वस्यावधूतः कृतार्थोऽहमिति कृष्णेन वर्णितं १॥ रामः रामः रामः

कुरराच्छिक्षितमाह परिग्रहो हीति यद्यत्प्रियतमं तस्य परिग्रहः तद्विद्वान्परिग्रहो दुःखमिति विद्वान्सन् यस्त्वकिं। चनः त्यक्तपरिग्रहः न तु दरिद्रः १ तदाह सामिषमिति २ अर्भकाच्छिक्षितमाह नेति गेहपुत्रिणां गृहतां या भवति सा चिंता च मे नास्ति आत्मनैव क्रीडा यस्य आत्मनि रतिः प्रीतिर्यस्य ३ द्वावेव चिंतया मुक्तौ परमानंद आप्लुतौ यो विमुग्धो जडो वालो यो गुणेभ्यः परं गतः ४ नन्वज्ञसर्वज्ञयोः किं सादृश्यं येनैक्येन परमं सुखमित्याह द्वाविति विमुग्धः अज्ञः जडः अनुद्यमः एवंभूतो यो वालः यश्च प्रकृतेः परमीश्वरं प्राप्तः तौ द्वौ ४ कुमार्याः शिक्षितं वक्तुं कुमार्याख्यायिकामाह क्वचि

ब्राह्मण उवाच परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणां। अनंतं सुखमाप्नोति तद्विद्वान् यस्त्वकिंचनः १ सामिषं कुररं जघ्नुर्वलिनो ये निरामिषाः तदामिषं परित्यज्य स सुखं समविंदत २ न मे मानावमानौ स्तो न चिंता गेहपुत्रिणां आत्मक्रीड आत्मरतिर्विचरामीह वालवत् ३ द्वावेव चिंतया मुक्तौ परमानंद आप्लुतौ यो विमुग्धो जडो वालो यो गुणेभ्यः परं गतः ४ क्वचित्कुमारी त्वात्मानं वृणानान्गृहमागतान् स्वयं तानर्हयामास क्वापि यातेषु वंधुषु ५ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव अवघ्नंत्याः प्रकोष्ठस्थाश्चक्रुः शंखाः स्वनं महत् ६ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः वभंजैकैकशः शंखान्द्वौ द्वौ पाण्योरशेषयत् ७ उभयोरप्यभूद्घोषो ह्यवघ्नंत्याः स्म शंखयोः तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ८ अन्वशिक्षमिमं तस्या उपदेशमरिंदम लोकाननुचरन्नेतान् लोकतत्वविवित्सया ९ वासे वहूनां कलहो भवेद्वार्ता द्वयोरपि एक एव चरेत्तस्मात्कुमार्या इव कंकणः १०

दित्यादिना वृणानान् स्ववरणाय आगतान् वंधुषु पित्रादिषु ५ शंखाः शंखवलयाः महद्यथा भवति तथा स्वनं चक्रुः ६ सा महती वृद्धिमती महती तत्स्वयं शाल्यवहननं जुगुप्सितं च दरिद्रताद्योतकं एकैकशः क्रमेण एकमेकं वभंज स्वकराद्ययासौ अशेषयत् अवशेषितवती ७ निरभिदत् पृथक्कृतवती ८ ननु कुमार्यास्त्ववचकथं संगतिस्तत्राह लोकानिति ९ वासे इति द्वयपाठे कलहहेतुः वार्ता गोष्ठी हेतुर्भवेदिति सर्वथा १० ॥ ॥ ॥ ॥

चित्तैकाग्रताहेतोः स्फूर्तिलक्षणा समाधिहेतुरिति शङ्कां छिन्दन्नित्याह मन इति तत्रोपायमाह जितेति आ-
सनजये श्वासजयः तस्य च जये श्वासाधीनं मनो निश्चलं भवति ननु तर्हि निश्चलं सदपि मनो विषयवासनया पु-
रि विक्षिप्तं सुषुप्ताविव सर्वं पालीयेत वा न तदा किं तत्राह वैराग्येणाभ्रियमाणं अभ्यासयोगेन लक्ष्ये ध्रियमाणं स्थि-
रीक्रियमाणं ११ एकत्रेति कुत्र तदाह यस्मिन्निति यत्तल्लयविक्षेपात्मकं मनः एतत् यस्मिन्परमानन्दरूपे भगवति ल-
ब्धास्पदं सत्कर्मरेणून् कर्मवासना मुञ्चति तस्मिन् ननु कर्मवासनात्यागेऽपि सुषुप्तिवल्लयो दुर्निवारः न सत्त्वेनेति

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः। वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः॥ ११ य-
स्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून्। सत्त्वेन वृद्धेन रजस्तमश्च विधूय नि-
र्वाणमुपैत्यनिन्धनं॥ १२ तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरन्तरं वा। यथेषुकारो नृ-
पतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे॥ १३ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः। अल-
क्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः॥ १४ गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्म-
नः। सर्पः परकृतं वेश्म प्रविश्य सुखमेधते॥ १५॥

वृद्धेन उपशमात्मकेन रजस्तमसोरभावे विक्षेपलयाभा-
वात् निर्वाणं अखण्डितैकरसाकारेणावस्थामुपैति कुतः अनिन्धनं गुणास्तत्कार्यं च तद्रहितं तदुक्तं योगशास्त्रे मनसो
वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः यासंप्रज्ञातनामासौ समाधिरभिधीयते इति १२ ततश्च नैव तत्स्फूर्तिरित्याह तदैवे-
ति बहिर्दर्शनादिनो अन्तरस्मृत्यादि यो गतात्मा तस्य अत्र इषुकरणे दत्तचित्तः भेरीघोषैरन्तिके व्रजन्तं नृपतिमपि न वेद तद्व-
त् १३ सर्पात्शिक्षितमाह एकचारीति योगिसमहंशस्यापि त्यागे कुमारीगुरुः जनसंत्यागे सर्पः स यथा जनाच्छङ्क-
मान एकाकी विचरति नियतनिकेतरहितश्च एकान्तवासी च आचारैर्गतिभिः सविषो निर्विषो वेति न लक्ष्यते च स-
हायश्च मितभाषी च तद्वत् मुनिर्वर्तेतेत्यर्थः १४ किंच गृहारम्भ इति अध्रुवात्मनः नश्वरदेहस्य सुखं यथा भवति तथापि

राम:

कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टिसंहारौ उर्णनाभिदृष्टांतेनसंपासं
भाविताविति वक्तुं प्रथमं संहारप्रकारमाह एक इति सार्द्धत्रयेण एकः कारकानिरपेक्षः
पूर्वसृष्टमिदं जगत् कालकलया कालशक्त्या संहृत्य १६ एक एवाद्वितीयः सजातीयवि
जातीयभेदशून्योऽभूत् कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यं नीतासु सतीषु गुणसाम्यं प्रधानं तदुपा
धिः पुरुषः तयोरीश्वरः परावराणां परे ब्रह्मादय अपरे अन्ये च मुक्ता जीवास्तेषां परमः प्राप्य आस्ते कुतः केव

एको नारायणो देवः पूर्वसृष्टं स्वमायया संहृत्य कालकलया कल्पांत इदमीश्वरः १६ ए
क एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु १७ स
त्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः परावराणां परमः आस्ते कैवल्यसंज्ञितः १८ केवला
नुभवानंदसंदोहो निरुपाधिकः केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकां १९ संक्षोभ।
यन्सृजत्यादौ तया सूत्रमरिंदम तामाहुस्त्रिगुणव्यक्तिं सृजंतीं विश्वतोमुखं २० ॥

ल्यसंज्ञितः मोक्षशब्दाभिधेयः १८ तत्र हेतुः केवलेति निर्विषयः स्वप्रकाशः आनंदानां संदोहः समूहः परमा
नंदरूपः कुतः निरुपाधिकः ततः केवलादेव सृष्टिं दर्शयति केवलेनात्मानुभावेन कालेन सूत्रं क्रियाशक्ति
प्रधानं महत्तत्त्वं सृजति १९ जीवसंसारहेतुभूतेस्त्रेसृष्टेपित्वमाभैरिति संबोधयति अरिंदम अरीन्नरा
गादीन् दमयितुं समर्थः सूत्रस्यैव व्यक्तिशब्देनोच्यमानस्य तामिति स्त्रीलिंगेन परामर्शः त्रिगुणव्यक्तिं गुण
त्रयस्य कार्यं अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहंकारद्वारेण सृजतीं २० ॥।

त्रिगुणकार्यस्य सूत्रसंज्ञायाः कारणमाह यस्मिन्निति कारणभूते समष्टिरूपेण यस्मिन्निदं विश्वं प्रोतं ग्रथितं वा
युर्वै गौतम तत् सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानीति श्रुतेः ये
न वात्यात्मप्राणरूपेणानुजीवः संसरति २१ तदेवं शिक्षितमर्थमुक्त्वा दृष्टान्तमाह यथेति हृदयादुद्गता वक्त्रतः।
वक्त्रेण संतत्य प्रसार्य विहृत्य क्रीडित्वा २१ एवं भगवद्ध्यानपरायणतया सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरवि
शेषाज्ज्ञातमित्याह यत्र यत्रेति सकलेन कार्त्स्न्येन बुद्ध्या प्रवेशितः निरुद्धः भयेन ध्यायन् सात्मतां तत्सारूप्यं साम्य

यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान् २१ यथोर्णनाभिर्हृदया[illegible]दूर्णां संतत्य वक्त्रतः तया वि
हृत्य भूयस्तां [illegible]ग्रसत्येवं महेश्वरः २१ यत्र यत्र मनो देही धारयेत्सकलं धिया स्नेहाद्द्वेषाद्भयाद्वा
पि याति तत्तत्स्वरूपतां २२ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः याति तत्सात्मतां राजन्पू
र्वरूपमसंत्यजन् २३ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो २४
देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कं तत्त्वान्यनेन विमृशामि यथा
तथापि पारक्यमित्यवसितो विचराम्यसंगः २५ ॥

तामिति पाठे त्वाकुर्वतां पूर्वरूपमसंत्यजन् इत्यस्या
यमभिप्रायः यथा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहान्तरेण सारूप्यं घटत इति २२ स्वदेहादे
हादेव शिक्षितमाह स्वात्मेति स्वात्मनो देहाच्छिक्षितं २४ गुरुत्वे विरक्तिविवेकयोर्हेतुः विरक्तिहेतुत्वमाह सत्त्वनि
धने उत्पत्तिविनाशौ बिभ्रत्स्म सततं आर्त्युदर्कं दुःखमेवोत्तरफलं बिभ्रत् यद्वा सततार्तिरेवोदर्कं उत्तरफलं
यस्य तत्सत्त्वनिधनं बिभ्रत् विवेकहेतुत्वमाह तत्त्वानीति यथायथावत् एवमप्युपकारित्वेऽपि देहे नैवास्था
कर्तव्येत्याह तथापीति पारक्यं श्वसृगालादिभक्ष्यमिति निश्चितवान् २५ ॥ ॥ ॥

स तन्नात्युदर्कांतं प्रपंचयति जायेति द्वाभ्यां यस्य देहस्य प्रियचिकीर्षया भोगसंपादनेन जायादिवर्गान्वित-
न्वन् पुष्णाति पुरुषः कथंभूतः सकृच्छ्रं यथा भवति तथावरुद्धानि संचितानि धनानि येन सः देहविशेषणानि वा
स देहः स्वांते स्वस्यायुषोंते अवसीदति नश्यति किंच देहनाशेपि न दुःखसमाप्तिरित्याह अस्य पुरुषस्य देहां-
तरबीजं कर्म सृष्ट्वा वृक्षस्येव धर्मो यस्य सः २६ किंच जिह्वेति अमुं देहं तदभिमानिनं पुरुषं वा एकतः रसं प्र-
ति जिह्वा अपकर्षति आकर्षति कर्हि कदाचित् तर्षा पिपासा जलं प्रति शिश्नो व्यवायं प्रति त्वक् स्पर्शं प्रति

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यत्प्रियचिकीर्षतया वितन्वन् स्वां।
ते सकृच्छ्रमवरुद्धधनाप्तदेहः सृष्ट्वास्य बीजमवसीदति वृक्षधर्मा २६ जिह्वैकतोपकर्षति कर्हि
तर्षा शिश्नोन्यतस्त्वगुदरं श्रवणं कुतश्चित् घ्राणोन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः
सपत्न्य इव गेहपतिं लुनंति २७ सृष्ट्वा पुराणि विविधान्यज आत्मशक्त्या वृक्षान्सरीसृपप-
शून्खगदंशमत्स्यान् तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः २८

त्वक् स्पर्शं प्रति उदरं अन्नमात्रं प्रति श्रवणं शब्दं प्रति घ्राणो गंधं प्रति चपलदृक् रूपं प्रति क्व च क्वचित्स्वः स्व-
विषयं प्रति कर्मशक्तिः अन्यदपि कर्मेंद्रियं लुनंति त्रोटयंति २७ तदेवं देहो गुरुरित्यादिभिस्त्रिभिर्विरक्तिविवेकहेतुत्व-
मुपपाद्येदानीमन्यदेहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते सृष्ट्वेति द्वाभ्यां पुराणि शरीराणि पुरुषं पुरुषदे-
हं ब्रह्मणो अवलोकाय अपरोक्षाय धिषणा बुद्धिर्यस्मिन् तं तदुक्तं तासामेषोऽधीप्रियेति श्रुतिः पुरुषत्वे वा विस्त-
रात्मेत्यादिश्वरोधिकरणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्ट्वा ताभ्यः प्रति भोगार्थं शरीरं मयाचत ता-
भ्यो गोशरीरं अश्वशरीरं पुरुषशरीरं यथाक्रममानीतवान् ततस्माद्देवताः सुकृतं बतेत्यायतनं चक्षुरादिस्थानं अ-
स्मिन् देहे प्रविशतेति तदाहताभ्यः इत्यादि तथा ताभ्यो गामानयत् ता अब्रुवन्न वै नो पर्याप्तमिति ताभ्योऽश्वमानयत् तु

तस्माद्बहूनां संभवानां जन्मनामंते मानुष्यं अनित्यमप्यर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वेदं अनुमृत्यु अनुनि
रंतरं मृत्युर्यस्य तत् यावन्न पतेत्तावत्तूर्णं निःश्रेयसाय यतेत विषयः पुनः सर्वतः पश्वादियोनिष्वपि।
स्यादेव २९ मद्देहे एवं हेयोपादेयविवेकं बहुधा निरूप्येदानीं यदुक्तं त्वं तु कल्पः कविर्दक्षः इत्यादि तत्रोत्तरमाह एवमिति।
एवं बहुभ्यो गुरुभ्यः शिक्षितेन विशिष्टं ज्ञानमेवालोकः प्रदीपो यस्य सः सम्पन्नो वा आत्मा विशेषणं आत्मनि स्थितः ए
वं महीं विचरामि ३० ननु किं बहुभिर्गुरुभिः नहि कश्चित्केनचिद्गुरुप्रमुखैर्बहवो गुरवः आश्रिताः तत्राह न ह्येकस्मा
दिति बहुधा सप्रपंचं निष्प्रपंचं निरूपणेन ऋषिभिः अयं भावः नैते परमार्थोपदेष्टारो गुरवः किंत्वन्वयव्यतिरेकाभ्यामात्म

लब्ध्वा सुदुर्लभमिदं बहुसंभवांते मानुष्यमर्थदमनित्यमपीह धीरः तूर्णं यतेत न पतेदनुमृ
त्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् २९ एवं संजातवैराग्यो विज्ञानालोक आत्म।
नि विचरामि महीमेतां मुक्तसंगोऽनहंकृतिः ३० न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलं
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ३१ श्रीभगवानुवाच इत्युक्त्वा स यदुं विप्रस्तमामंत्र्य ग
भीरधीः वंदितोऽभ्यर्चितो राज्ञा ययौ प्रीतो यथागतं ३२ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः
सर्वसंगविनिर्मुक्तः समचित्तो बभूव ह ३३ इति श्रीभागवते महापुराणे एकादशस्कंधे नव

त्यसंभावनादिमात्रनिवर्तका तेषां बहुत्वं युक्तमेवेति ज्ञानप्रदं गुरुमेकमेव वस्तुत इति महाभिजनं गुरुं शान्तमुपासीतेति श्रुते
श्च तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तममिति ३१ विप्रो दत्तात्रेयः यो गाढं मां पुरुं अपश्यद्यदुहैहयाद्या इत्युक्तत्वात् यथाग
तं तेनैव यदृच्छया यथा विस्मयार्थः ३२ भगवान्स्वीयं ब्रह्मविकुलमिति श्लाघयति नः पूर्वेषां पूर्वजः इति अत्र संग्रहश्लोकाः
कपोतमीनहारितकुमारीगजपन्नगाः पतंगकुररभ्रामराः हे पार्थ गुरवो मताः १ मधुकृन्मधुहर्ता च पिङ्गला च ह्युपोत्स्व
पः उपादेयार्थविज्ञाने शेषाः पश्वादयो मताः तद्वातरः सरस्तत्र तत्र तत्र स्फुटीकृतः अधीयतेतो पि चाष्टनवाध्या
वीरिताः क्रमात् ३३ इति श्रीभागवते महापुराणे एकादशस्कंधे भगवद्धर्मवंशावलीटीकायां नवमोऽध्यायः ९ ॥ रामः

चतुर्विंशतिगुरुव्याख्यालब्धसंभावनामुवः उद्धवस्यात्मतत्त्वार्थे साधनोक्तिरतः परे दशमे देहसंबंधात्संसृतिर्नि
त्मनः स्वतः इत्येतद्दर्शयामास मतांतरनिरासतः तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकता ज्ञानस्य तत्त्वज्ञाना
पादितं आरम्भसाधनान्युपदिशति भगवान् मयेति मयापंचरात्राद्युक्तेषु स्वधर्मेष्ववहितः अप्रमत्तः सन् तद
विरोधेन वर्णाद्याचारमनुतिष्ठेत् १ कथ मात्मवत्त्वा संभवतीत्यत आह आन्वीक्षेतेति स्वधर्मैर्विशुद्धचित्तः स
न्देहिनां विषयेषु सत्यत्वाभिनिवेशेन ये सर्वे आरंभास्तेषां फलवैपरीत्यं पश्येत् एवं फलवैपरीत्यदर्शनाद
कामः स्यात् २ किंच कामविषयाणां मिथ्यात्वादयीत्याह सुप्तस्येति विफलः अर्थशून्यः अत्रैव प्रयोगः ३

श्रीभगवानुवाच मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः वर्णाश्रमकुलाचारमका
मात्मा समाचरेत् १ आन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनां गुणेषु तत्त्वध्यानेन
सर्वारंभविपर्ययं २ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः नानात्मकत्वाद्विफलस्त
थाभेदात्मधीर्गुणैः ३ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् जिज्ञासायां संप्रवृत्तो ना
द्रियेत्कर्मचोदनां ४ ॥ इंद्रियैर्बहिर्नानाबुद्धिः सा विफला नानात्मकत्वादैंद्रियकत्वाच्च मनोजन्य
स्वप्नमनोरथवदिति ३ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहास
हासया इति स्मृतिः ननु भगवत्परस्तत् किं कुर्यात् किं वा परिहरेदिति निष्क्रियेनवृहीतिपक्षतः आह निवृ
त्तमिति अतः प्रवृत्तकाम्यकर्म त्यजेन्निवृत्तं नित्यनैमित्तिकमेव कुर्यात् आत्मविचारे तु सम्यक् प्रवृत्तो
निवृत्तकर्मचोदनामपि नाद्रियेत् नित्यनैमित्तिकसंकोच्य आदरेण जिज्ञासा कर्तव्या ४ ॥ रामः

किंतु यमानहिंसादीन् अभीक्ष्णमादरेण सेवेत शौचादींस्तु नियमान् क्वचिद्यथाशक्ति: तदा आत्मज्ञानविरो
धेन यमान्द्वादश नियमांश्चैकोनविंशो ध्याये वक्ष्यति किंच यमेभ्यस्यादरं परित्यज्य गुरुमुपासीतेत्याह मदभिज्ञ
मिति मदात्मकं मद्रूपं ५ गुरुसेवकस्य धर्मानाह अमानीति दक्षः अनलसः निर्ममः जायादिषु ममतारहितः
गुरौ तु दृढसौहृदः असत्वरः अव्यग्रः अमोघवाक् व्यर्थालापरहितः एतान्येव शिष्यस्य लक्षणानि ज्ञेयानि ६
ननु स्वजायादिषु कथं निर्ममः स्यात्तत्राह जायेति उदासीनत्वे हेतुं विवेकं दर्शयति आत्मनोऽर्थं प्रयोजनं स

यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकं ५
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ६
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ७
विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रका

र्वत्र सममेव पश्यन्निति अयं भावः सर्वदेहेष्वात्मन एकत्वात् यथा परदेहे अन्यस्मिन्स्वदेहे आत्मनोऽर्थः सुखादिः स
मानस्तेन विशेषाभावेऽपि ममताभिनिवेशस्तथैवमुदासीनः सन्नाचरन् प्रवर्तेतेति ७ अदेहोऽसौ देहव्यतिरिक्तः आत्मा
यस्यैकार्थः सर्वेषु समः स्यात्तमाह विलक्षण इति स्थूलसूक्ष्माद्देहाद्यात्मान्वयः यतो विलक्षणः ईदृशो विलक्षणत्वे हेतुं द
र्शयति ईक्षिता स्वदृगिति द्रष्टा हि दृश्याद्विलक्षणः तत्र स्वप्रकाशत्वमजडत्वं विलक्षणत्वे दृष्टान्तः यथा
ग्निर्दाहकः प्रकाशश्च दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ८॥ रामः रामः रामः रामः

अनेनैव दृष्टांतेन नित्यत्वानादित्वविभुत्वैकत्वादयोऽपि सिद्धा इतीत्याह निरोधेति यथाग्निर्दारुष्वंतःप्रविष्टोऽग्नि
स्तत्कृतान्नाशादीन्धारयतीति न तु स्वतो नाशादिमान् एवं देहगुणान्नित्यत्वादीन् देहान्तरो नित्यादिस्वरूप आत्मा।
आत्मा न भवतीति तत्र आत्मसम्बन्धाद्विभिरपि देहस्तद्गुणाद्यन्यत्वमितिभावः ९ ननु अग्नेर्दारुसंयोगात् इमे भावाः कथं घट
न्त आत्मनस्त्वसंगत्वात् कथं देहेन तद्धर्मैर्वा संबंधः संबंधे वा कुतस्तन्निवृत्तिः तत्राह योऽसाविति गुरुर्ब्रह्मेश्वराधीनैर्मा
यागुणैर्योऽसौ स्थूलोऽयं च सूक्ष्मश्च देहो विरचितः पुंसो जीवस्यायं संसारस्तन्निबंधनः तदध्यासकृतः हि यस्माद्दे
वतस्मादात्मविद्या तन्निवर्तिकेत्याह आत्मन इति विद्या विज्ञानं तस्याछित् छेत्री आछित्तिर्निवापरच्छेदः १० यस्माद्।

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् अंतःप्रविष्ट आधत्त एवं देहगुणान्परः ९
योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि संसारस्तन्निबंधोऽयं पुंसो विद्याछिदात्मनः १० तस्मा
ज्जिज्ञासयात्मानमात्मस्थं केवलं परं संगम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमं ११ आचार्योऽरणि
राद्यः स्यादंतेवास्युत्तरारणिः तत्संधानं प्रवचनं विद्यासंधिः सुखावहः १२ वैशारदी सातिविशुद्ध
बुद्धिर्धुनोति मायां गुणसंप्रसूतां गुणांश्च संदह्य यदात्ममेतत्स्वयं च शाम्यत्यसमिद्यथाग्निः १३

वे तस्माज्जिज्ञासया विचारेण आत्मस्थं आत्मनि कार्यकारणसंघातरूपे स्थितं आत्मानं सम्यक् ज्ञात्वा एतदेतस्मि
न् देहादौ वस्तुबुद्धिं स्थूलसूक्ष्मक्रमेण निरसेत्त्यजेत ११ गुरोर्लब्धया विद्याऽविद्या तत्कार्यनिरसनक्रमेति स्फुटयन्क
र्तुं विद्यास्वरूपमग्न्युत्पत्तिरूपकेण निरूपयति आचार्य इति आद्यः आधारः अंतेवासी शिष्य उत्तरस्तत्संधानं तयोर्मध्य
मथनकाष्ठं प्रवचनं उपदेशः विद्यासंधिः संधौ भवत्यग्निरिव तथा च श्रुतिः आचार्यः पूर्वरूपं अंतेवास्युत्तररूपं वि
द्यासंधिः प्रवचनं संधानमिति १२ अग्निस्थानीयमेवाह वैशारदीति विशारदो निपुणः तेः शिष्यैः प्राप्तेन गुरोर्गुणो
पदिष्टा या अतिविशुद्धा बुद्धिः गुणकार्यरूपां मायां निवर्तयति यदात्मकमेतद्विश्वं जीवस्य संसृतिनिमित्तं तान् गुणा
न्दग्ध्वा प्रशमित निरिंधनः तस्मात्कार्येण कारणेन वाविद्यया च संबंधनाभावात् साक्षात्परमानंदरूपो भवति १३॥

एवं तावत्स्वप्रकाशज्ञानरूपो नित्य एक एवात्माकर्तृत्वादयश्च धर्मास्तस्य देहोपाधिकास्तद्व्यतिरिक्तं च सर्वमनि
त्यमायामयं च अतः सर्वतो विरक्तः सन्नात्मज्ञानेन मुच्यतेत्युक्तं विलक्षणः स्थूलसूक्ष्मादित्यादिना तदेवं श्रु
तिसमन्वयेन निर्णीतेऽर्थे मतान्तरविरोधेन संदेहो माभूदिति तन्मतं निराकर्तुमुद्भावयति अथेति अथ मन्यसे
एषां जीवात्मनां कर्मकर्तॄणां सुखदुःखयोर्भोक्तॄणां च नानात्वमिति एवं हि जैमिनीया मन्यन्ते अहं प्रत्ययविज्ञे
य एवात्मा स च प्रतिशरीरं भिन्नः कर्ता भोक्ता स्वयं च न तु तत्स्वरूपभूतो निर्विकार एकः परमात्मास्तीति यथो
क्तं अहं प्रत्ययविज्ञेयो ज्ञातव्यः सर्वदेवहीति तथा वैराग्यं च न संभवति तथा हि भोगस्थानानामनित्यत्वाद्वै

अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः नानात्वमथ नित्यत्वं लोककालागमात्म
नां १४ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा तत्तदाकृतिभेदेन जायते भिद्यते च
धीः १५ एवमप्यंग सर्वेषां देहिनां देहयोगतः कालावयवतः संति भावा जन्मादयोऽसकृ

राग्यं भवेत् भोगकालस्य वा तदुपायकर्मबोधकागमस्य वा भोक्तुरात्मनो वा नित्यत्वे तदसिद्धिरित्याह अथ नित्य
त्वं लोककालागमात्मनामिति मन्यसे इति १४ न च भोग्यानां विच्छेदान्मायामयत्वाद्वा वैराग्यं स्यादित्याह सर्वभावानां
स्रक्चंदनादीनां संस्था स्थितिः औत्पत्तिकी प्रवाहरूपेणानित्या न तथाच वदंति न कदाचिदनीदृशं जगदिति अतस्तल्ल
ताकृतिभेदेऽपि नास्तीति भावः किं च यथा यथावत् न तु मायामयी तथा धीः न चात्मस्वरूपभूतं नित्यमेकं ज्ञानम
स्तीत्याह तत्तदिति घटपटाद्याकारभेदेन धीर्जायते अतो अनित्या भिद्यते च अयं गूढोऽभिप्रायः नहि नित्यज्ञान
रूप आत्मा अपि तु ज्ञानपरिणामवान् न च विकारित्वेनानित्यप्रसंगः यथाहुः विक्रियाज्ञानरूपस्य न नित्यत्ववि
रुध्यत इति अतो मुक्ताविंद्रियादिरहितस्य परिणामाभावाज्जडत्वेन तस्याः पुरुषार्थत्वासंभव इति वक्ष्यमाण
निवृत्तिरिति १५ तत्र तावदंगीकृत्यैव तज्ज्ञोपपादनाय प्रवृत्तिमार्गस्यानर्थहेतुत्वं प्रपंचयति एवमपीत्यादिना लोका

अत्रार्थात्स्वतंत्र्यपक्षे दुःखकर्मणो दुःखभोगस्याप्यसंभवादित्यर्थः १७ ननु ये सम्यक् कर्म कर्तुं जानंति ते सुखिन एव ये तु न जानंति त एव दुःखिनः इति चेत्तत्राह नेति विदुषामपि किंचित्सुखं न विद्यते तथा मूढानामपि दुःखं न विद्यते अतो वयं कर्मकुशलत्वात्सुखिनः इति तेषां वृथैवाहंकारः इत्यर्थः १८ अंगीकृत्याप्याह यदीति ते योगमुपायं न विदुः यथा साक्षान्मृत्युर्न प्रभवेत् १९ तथापि यावज्जीवं सुखं भविष्यतीति चेत् नेत्याह को न्विति यत अंतिके वर्तमानो मृत्युर्न। तुष्टिं ददाति आघातं वधस्थानं प्रति २० एवमस्मिंल्लोके सुखं नास्तीत्युक्ते लोकांतरेपि तथैवेत्याह श्रुतमिति श्रुतं स्वर्गा-

अत्रापि कर्मणां कर्तुरस्वातंत्र्यं च लक्ष्यते भोक्तुश्च सुखदुःखयोः को न्वर्थो विवशं भजेत् १७
न देहिनां सुखं किंचिद्विद्यते विदुषामपि तथा च दुःखं मूढानां वृथाहंकरणं परं १८ यदि प्राप्तिं वि-
घातं च जानंति सुखदुःखयोः तेप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा १९ को न्वर्थः सुखयत्येनं का-
मो वा मृत्युरंतिके आघातं नीयमानस्य वध्यस्येव न तुष्टिदः २० श्रुतं च दृष्टवद्दुष्टं स्पर्द्धासूयात्ययव्य-
यैः बह्वंतरायकामत्वात्कृषिवच्चापि निःफलं २१ अंतरायैरविहितो यदि धर्मः स्वनुष्ठितः तेनापि
निर्जितं स्थानं यथा गच्छति तच्छृणु २२ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः भुंजीत देववत्तत्र
भोगान्दिव्यान्निजार्जितान् २३ स्वपुण्योपचिते शुभ्रे विमान उपगीयते गंधर्वैर्विहरन्मध्ये देवीनां हृद्यवे-
षधृक् २४ स्त्रीभिः कामगयानेन किंकिणीजालमालिना क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः २५ ॥

दितं स्पर्द्धा परसुखासहनं असूया परगुणे दोषाविःकरणं अत्ययो नाशः व्ययः अपचयः तैर्दुष्टं पक्षे व्ययो नाशः अ-त्ययोऽतिशयः तद्दृष्टांतः आद्यात् दुःखमित्यर्थः किं च बह्वंतरायत्वेपि गुणादिरूपा विघ्ना यस्मिन् कामे सुखं तस्य भावस्तत्त्वं तस्मा-त्कृषिर्यथा बहुविघ्नाक्रांता बहुसुखत्वेन श्रुतमपि निःफलं २१ विघ्नवैगुण्याद्यभावमंगीकृत्यापि नाशदुःखं परिहरति-त्याह अंतरायैरिति यैर्निर्जितं साधितं २२ यज्ञैर्देवताः इष्ट्वा इतिरूपा इष्टा स्वपुण्योपचिते सर्वभोगसंपन्ने देवीनां म-ध्ये विहरन् गंधर्वैरुपगीयते २४ कामेन इच्छया गच्छता विमानेन किंकिणीजालमालिना इत्यादिसमस्तशोभिना सह स्त्री-

कालेन चालितः पातितः २६ प्रवृत्तिर्द्विधा विध्यनुसारेण काम्यकर्मणि वा तल्लंघनेनाधर्मे वा तत्र कर्मप्रवृत्ति।
निरुक्ता अधर्मप्रवृत्तेर्गतिमाह यदीति यद्यन्वयः अजितेंद्रियत्वात्कामात्मा अतः कृपणः अतो लुब्धो भोगेषु व्याकु-
लः अतः स्त्रैणः स्त्रीलंपटः तदर्थं भूतविहिंसकः २७ किं च दुष्टजनप्रसिद्धो मिलितो धनाद्यर्थं पशूनविधिनाहत्वा तमः
स्थावरतां याति २८ एवं कर्मसु प्रवृत्तस्य न सुखं न च दुःखनिवृत्तिः कृतिरित्युपसंहरति कर्माणीति २९ नश्यापि लोकानां नित्य-
त्वादमर्त्यधर्मत्वाच्च लोकपालानामसुखमस्तीति चेत्तत्राह लोकानामिति द्विपरार्धं परमायुर्यस्य तस्य ब्रह्मणः

तावत्स मोदते स्वर्गे यावत्पुण्यं समाप्यते क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः २६ यद्यध
र्मरतः संगादसतां वाजितेंद्रियः कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः २७ पशूनविधि
नालभ्य प्रेतभूतगणान्यजन् नरकानवशो जंतुर्गत्वा यात्युल्बणं तमः २८ कर्माणि दुःखोदर्का
णि कुर्वन्देहेन तैः पुनः देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः २९ लोकानां लोकपालानां मद्भयं
कल्पजीविनां ब्रह्मणोपि भयं मत्तो द्विपरार्धपरायुषः ३० गुणाः सृजंति कर्माणि गुणोनुसृजते गु
णान् जीवस्तु गुणसंयुक्तो भुंक्ते कर्मफलान्यसौ ३१ ॥

पितृयाणसृतिभिर्यास्माद्वातः पवते भीषोदेति सूर्यः भी-
षास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पंचमः इति श्रुतेः प्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्तस्य ततो निवृत्तिरेव युक्तेति
तात्पर्यार्थः ३० एतेनैव स्वधर्मेश्वरत्वाविष्कारेणेश्वराभावाङ्गीकारः परित्यक्तः अन्यदपि प्रौढमतं मते
तन्निराकरोति चतुर्भिः तत्र यदुक्तं कर्ता भोक्ता च पुरुष एवास्मीति तन्निराकरोति गुणाः इति गुणाः इंद्रियाणि कर्माणि सृजं-
ति न त्वात्मा आत्मैवेंद्रियाणि प्रवर्तयन् कर्माणि करोतीति चेन्नेत्याह गुणः इति गुणाः सत्त्वादयः गुणान् इंद्रियाणि अ-
नुसृजते प्रवर्तयति न त्वात्मा अतः कर्तृत्वं तावन्नास्ति भोक्तृत्वमप्यौपाधिकमित्याह जीवस्त्विति गुणसंयु-
क्तः इंद्रियादिसंयुक्तः कुतः इत्यत आह असौ तेषु अहंकारवानित्यर्थः ३१ ॥ ॥ रामः

यदुक्तमात्मनो नानात्वं तदप्यौपाधिकमित्याह यावदिति गुणानां वैषम्यं अहंकारादिकार्यरूपं न त्वात्मन ए
कत्वे कथं पारतंत्र्यमुक्तं कथं लोकपालादीनामपि मद्भयमित्युक्तं तत्राह नानात्वमिति ३२ यच्चागूढमभिप्रेतं प्र
वृत्तिरेव श्रेयसीति तत्राह यावदिति स्वतंत्र्यं गुणवैषम्यं तत्कृतं भोगं कर्म चेत्यर्थः उपासीरन् सेवेरन् ते लो
कादीनामनित्यत्वाच्छुचार्पिताः प्राप्ताः संतो मुह्यंति ३३ न केवलमनित्यतामात्रं किंतु मायामयत्वमपीत्याह।
काल इति स्वभावो देवत्वादिपरिणामहेतुः धर्मस्तद्योगकारणं गुणव्यतिकरे मायायां मे सति मामेव प्राहुः न तु म।

ना१ यावत्स्यात्स्वगुणवैषम्यं तावन्नानात्वमात्मनः नानात्वमात्मनो यावत् पारतंत्र्यं तदैव हि ३२
यावदस्यास्वतंत्रत्वं तावदीश्वरतो भयं य एतत्समुपासीरंस्ते मुह्यंति शुचार्पिताः ३३ का
ल आत्मागमो लोकः स्वभावो धर्म एव च इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ३४ श्रीउद्ध
व उ० गुणेषु वर्तमानोपि देहजेष्वनपावृतः गुणैर्न बध्यते देही बध्यते वा कथं विभो ३५ कथं वर्ते
त विहरेत्कैर्वा ज्ञायेत लक्षणैः किं भुंजीतोथ विसृजेच्छयीता— तयाति च ३६ ॥

व्यतिरिक्ताः संतीति तन्निवृत्तिरेव मुक्तिहेतुत्वाच्छ्रेयसीति सिद्धं ३४ एवं तावदेक एवात्मा तस्य च गुणकार्यदेहसंबं
धकृतः संसारः आत्मज्ञानाच्च मुक्तिरित्युक्तं विलक्षणाः स्थूलसूक्ष्मादित्यादिना तदेव मतांतरनिरासेन दृढीकृत
मप्येषामित्यादिना तत्र पृच्छति गुणेष्विति अयमर्थः गुणेष्वसत्सु मुक्तिः सत्स्वेव च आद्ये ज्ञानसाधनाभावान्न मु
क्तिः द्वितीये च गुणेषु वर्तमानोपि तत्कार्ये देहजेषु कर्मसु सुखादिषु च कथं न बध्यते तथापि तैराकाशवदनावृतत्वा
न्न बध्यते इति चेत्तर्हि बंधो न भवतीत्याह अनपावृतः कथं न बध्यते इति ३५ यदि तु सत्स्वेव तदहंकारेण बध्यते
तन्निवृत्त्या च मुच्यते इति मतं तर्हि तल्लक्षणं ज्ञातव्यमिति पृच्छति बद्धो मुक्तो वा कथं वर्तेतेत्यादि किं भुंजीत कथं
भुंजीतेत्यर्थः ३६ ॥ रामः रामः रामः रामः

एतद्विषयंप्रश्नंविकिंचएकएवात्मा॥देहादिगुणसंबंधान्नित्यबद्धःमुक्तश्चोच्यते॥नित्यत्वप्रसंगान्नित्यमुक्त।
श्चस्यथंगीकारस्यात्तत्रभ्रमएवभवतीत्याह नित्यबद्ध इति। इत्येकादशस्कंधेदशमोऽध्यायः १०॥ एकादशे
तुबद्धानांमुक्तानांचापिलक्षणं साधूनांचतथाभक्तेर्लक्षणंहरिणोदितं नित्यबद्धोनित्यमुक्तएकएवेतिमेभ्र
मः इतियदुक्तं तत्किंवस्तुतोविरोधात् प्रतीतितोवा नाद्यः बंधमोक्षयोर्वास्तवत्वाभावात् अहबद्धोमुक्तइति।
द्वाभ्यां आत्माबद्धोमुक्तश्चमेगुणतः मदधीनसत्वादिगुणोपाधितः नतुवस्तुतः नन्वौपाधिकत्वेपितदुल्लपाक।

एतदच्युतमेब्रूहिप्रश्नंप्रश्नविदांवर नित्यमुक्तोनित्यबद्धएकएवेतिमेभ्रमः ३७ इतिश्री०
भा०म०एका०दशमोऽध्यायः १०॥ श्रीभगवानुवाच बद्धोमुक्तइतिव्याख्यागुणतोमेन
वस्तुतः गुणस्यमायामूलत्वान्नमेमोक्षोनबंधनं १ शोकमोहौसुखंदुःखंदेहापत्तिश्चमा
यया स्वप्नो यथात्मनःख्यातिःसंसृतिर्नतुवास्तवी २ ॥

द्विवद्वास्तवत्वंकिंनस्यात् तत्राह गुणस्यमायामूलत्वाद्बंधनंनास्ति अतएवमोक्षश्चनास्तीतिमनुकर्षस।
वैशास्त्रविरुद्धमुच्यते तत्राह इतिमेव्याख्येति एवंमत्कृतोनिर्णयः अन्यमितिकृतर्कैरित्यर्थः अवैवमन्वयः
आत्माबद्धोमुक्तइतियाव्याख्याउक्तिसामेगुणतः मद्गुणापारतंत्र्यात् अत्रहेतुत्वेनगुणानियंतद्वित्वस्मिंस्तत्व
ह्यतिरेकमाह अतएवनमेबंधनंमोक्षोवेति अन्यत्स्पष्टं १ एवंकारणभूतगुणानांमायामयत्वात्तत्कार्यं
संसृजतिमायेतिनप्रपंचयतिशोकमोहाविति यथास्वप्नः आत्मनःबुद्धेरेवख्यातिःविवर्तितेनतद्वत् २ रामः

अतो वस्तुविरोधस्तावन्नास्ति प्रतीतिस्त्वौपाधिकी घटत इत्याह विद्याविद्ये इति तन्येते मोक्षबंधावाभ्यामिति तनू शक्ती
कुतः मम मायया विनिर्मिते मायाक्लृप्तिरूपत्वात् बंधमोक्षकरीत्येकवचनं द्विवचनार्थे न तु तत्कार्यत्वे बंधमोक्षयोरना
दित्वनित्यत्वे न स्यातां न आद्ये अनादी अतो यावदविद्यां प्रवर्तयामि तावद्बंधः यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्य
र्थः तथा च स्कंदपुराणे बंधको भवपाशेन भवपाशाच्च मोचकः कैवल्यदः परं ब्रह्म विष्णुरेव सनातन इति तत्र शरी
रिणामिति बहुवचननिर्देशाद्विषयभेदेनाविरोध उक्तः इति भ्रांतिं निवर्तयन् बंधमोक्षव्यवस्थामुपपादयति ३ एक
स्यैवेति तर्हि किमात्मभेदात्तवापि बंधः नहीत्याह अंशस्य जीवस्यैवेति नन्वात्मभेदे जीवो नाम कोऽन्योऽस्ति एक

विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणां मोक्षबंधकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥
एकस्यैव ममांशस्य जीवस्यैव महामते बंधोऽस्याविद्ययानादिर्विद्यया च तथेतरः ४ ॥
अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ५ ॥

पं च बंधमोक्षसुखदुःखादिव्यवस्था तत्राह ममांशस्य अयं भावः यथैकस्यापि चंद्रादेर्जलाद्युपाधिना विभ्रमप्र
तिबिंबरूपो भेदः यथा च तत्र जलकृताः कंपादयः प्रतिबिंबस्यैव यथा च तत्र प्रतिबिंबानामप्युपाधिभेदेन भेदादेक
स्मिन् उदके भग्ने तद्गतप्रतिबिंबस्यैव विकंपनान्यगतस्य तथा विद्यायां प्रतिबिंबितस्य जीवस्यैव तत्कृतो बंधः
तस्य चोपाधितो भेदान्नानाव्यवस्थेति तथा चाहुः यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते न सर्वे संप्रयुज्यं
ते तथा जीवाः सुखादिभिरिति एतच्चातिरहस्यं स्वबुद्ध्या निश्चितमिति संबोधयति हे महामते इतरो मोक्षः ४ म ५
तदेवं व्यवस्थामुपपाद्य कथं वर्ततेत्यादि वैलक्षण्यप्रश्नस्योत्तरमाह अथेति तत्र वैलक्षण्यं द्विविधं जीवेश्वर
योरेकं जीवानां चैकं तत्र जीवेश्वरयोर्वैलक्षण्यमाह विरुद्धधर्मिणोरिति सार्धद्वयेन श्लोकानां धर्मवतोः ए
कस्मिन् धर्मिणि शरीरे नियम्यनियंतृत्वेन स्थितयोः ५ ॥ रामः रामः रामः

सुपर्णाविव लाघवशालिनाविव देहात्प्रयान्तौ सदृशौ चिद्रूपत्वात् सखायौ अवियोगादेकमत्याच्च यदृच्छया अनि
रुक्तया मायया च कृतं नीडं इति च नीडो देहः ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रतीति श्रुतेः ऊर्ध्वमूलमधःशाखम
श्वत्थं प्राहुरव्ययमिति स्मृतेश्च तस्मिन्वृक्षे कृतनीडौ निकेतने हृदयरूपं यथाभातौ तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्प
लोपमं स्वस्य देहस्थितमिदं नीयकर्मफलमिति यावत् खादतीति भक्षयति अन्य ईश्वरः निरन्नः अभोक्तापि निजानंद
तृप्तो बलेन ज्ञानादिशक्त्या भूयान् अधिकः श्रुतिश्च द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयो

सुपर्णावेतौ सखायौ यदृच्छयाकृतनीडौ च वृक्षे एकस्तयोः खादति पिप्पलान्नमन्यो नि
रन्नोपि बलेन भूयान् ६ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः योविद्य
यायुक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ७ देहस्थोपि न देहस्थो विद्वान्स्वप्नाद्य
थोत्थितः अदेहस्थोपि देहस्थः कुमतिः स्वप्नदृग्यथा ८ ॥

रन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति ६ बलाधिक्यमेवाह आत्मानमिति अतः योविद्यया
युक्तः स तु नित्यबद्धः अनादिबद्धः यस्तु विद्याप्रधानः स तु नित्यमुक्तः मायया अनावरकत्वात् आश्रयाव्या
मोहकत्वाच्च ७ इदानीं बद्धमुक्तजीवानामेव मिथो वैलक्षण्यमाह देहस्थोपीति द्वाभ्यां विद्वान्मुक्तः सत्का
रवशेन देहस्थो न भवति यथा स्वप्नादुत्थितः स्वप्नमानोस्व प्रदेहस्थितोपि तत्रस्थो न भवति तद्वत्सुखदुः
खाद्यभावात् तथा वस्तुतः अदेहस्थोपि कुमतिः अविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक् यथा।
स्वप्नगत इति ८ ॥ रामाय नमः रामाय नमः ॥

अत्र देहस्थत्वेन वैलक्षण्यान्तरमाह द्वाभ्याम् इन्द्रियैरिन्द्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान्स नाहंकुर्यात् अहं गृह्णा
मीति मतिं न कुर्यात् हि यस्मात् कुतः गुणैर्गुणेषु गृह्यमाणेषु अत एव अविक्रियः गुणा हि अन्ये तदुक्तं गीतासु तत्त्व
वित्तु महाबाहो गुणकर्मविभागयोः गुणा गुणेषु वर्तन्त इति मत्वा न सज्जत इति ९ अबुधस्तु एवं कर्माधीनेऽस्मिं
श्शरीरे वर्तमानः गुणैरिन्द्रियैर्भाव्येन कर्मणा तत्र देहादौ निबध्यते कुतः कर्तास्मीत्यहंकारेण तदुक्तं तत्रैव प्रकृ
तेः क्रियमाणानि गुणैः कर्माणि सर्वशः अहंकारविमूढात्मा कर्ताहमिति मन्यते इति १० एतैस्त्रिभिः श्लोकैः क
थं वर्ततेत्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तते इत्युत्तरमुक्तं भवति वैलक्षण्यान्तरं वदन् किं भुञ्जी

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च गृह्यमाणेष्वहंकुर्यान्न विद्वान्यस्त्वविक्रियः ९ दैवाधी
ने शरीरेऽस्मिन्गुणभाव्येन कर्मणा वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते १० एवं विरक्तः
शयन आसनाटनमज्जने दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ११ न तथा बध्यते विद्वा
स्तत्र तत्रादयन्गुणान् प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः १२ वैशारद्येक्षयास
ङ्गशितया छिन्नसंशयः प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते १३ यस्य स्युर्वीतसंकल्पाः
प्राणेन्द्रियमनोधियां वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः १४ ॥

तेत्यादिप्रश्नोत्तरमाह एवमिति
त्रिभिः ११ अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान् तथा अविद्वानिव शयनासनादिषु न बध्यते कुतः
तत्र तत्र विषयेषु गुणानिन्द्रियाणि आदयन् भोजयन् तत्साक्षित्वेन वर्तमानः ननु स्वयमदन् एतदेव कुतः तत्रा
ह प्रकृतिस्थोऽपि तैः सार्द्धं न यथा खं सर्वत्र स्थितमपि न सज्जते यथा सविता जले प्रतिबिंबितोऽपि यथानिलः सर्व
त्र संचरन्नपि तद्वत् १२ असंगेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया यस्य अतः संभावनादयो यस्य सः नाना
त्वात् देहादिप्रपंचात् १३ कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यान्तरमाह यस्य स्युरिति तद्गुणैः देहगुणैः संक
ल्पजन्याभिः प्राणादिवृत्तिभिर्विहरन्मुक्त इत्यर्थः १४ ॥ राम राम राम राम

मा० ए०

५४

एवंतावद्देहमुक्तयोः स्वसंवेद्यमेव चेललक्षणमुक्तं इदानीं केर्वाज्ञायेत लक्षणैरित्यपेक्षायां परेरपिज्ञेयंवै
लक्षण्यमाह यस्यात्मेति त्रिभिः हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिः यस्यात्मा देहः पीड्यते यदृच्छया येन केनापि क्व
चित् किंचिदर्च्यते वा सः बुधज्ञानी तत्र न व्यतिक्रियते नातिविक्रियत इत्यर्थः तदुक्तं याज्ञवल्क्येन यः कंट
कैर्वितुदति चंदनैर्यश्च लिंपति अक्रुद्धोपरितुष्टश्च समस्तस्य च तस्य चेति १५ किंच साध्वसाधु वा कु
र्वतो वदतो वा जनान्न स्तुवीत न च निंदेत् यो लौकिकव्यवहारविमुखः स मुक्त इत्यर्थः १६ आपि च न

यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः १५
न स्तुवीत न निंदेत कुर्वतः साध्वसाधु वा वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः १६
न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा आत्मारामोनया वृत्त्या विचरेज्जडवन्मुनिः १७
शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः १८
गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च वित्तं त्वतीर्थीकृतमंग वाचं हीनां म
या रक्षति दुःखदुःखी १९ ॥ रामः ॥

कुर्यादिति यो देहिके पिकर्मणि उदासीनः स मुक्त इतरो बद्ध इत्यर्थः एतावन्मेवसर्वेषां मुक्तानां साधनानि स्यात्
कुर्यादिति यो देहिके पिकर्मण्युदासीनः स मुक्तः इतरो बद्ध इत्यर्थः एतान्येव सर्वेषां मुमुक्षोः साधनानि स्यात्
व्यानि १७ यस्तु केवलशब्दब्रह्मणि परिनिष्ठः पांडित्यमात्रश्लाघी न तु तैः साधनैस्तत्पर्यनिष्ठो भवेत् तं निंद
ति शब्दब्रह्मणीति निष्णातः पारंगतोपि परे ब्रह्मणि न निष्णायात् ध्यानाद्यभियोगं न कुर्यात् तस्य शास्त्रश्रमः श्र
मैकफलः न तु तत्र सार्थपर्यवसायी अधेनुं चिरप्रसूतां १८ एतदेवान्यान्यपि निदर्शनैः प्रपंचयति गामिति दुग्ध
दोहां असतीं भार्यां कामभोग्यां देहं पराधीनं प्रतिदिन
नश्वरं हः पयः दुग्धो मोहो नो नरत्वात् यस्याः तां असत्प्रजां असतीं भार्यां कामभोग्यां देहं पराधीनं प्रतिदि
नं दुःखहेतुं असत्प्रजां दुष्टां दुष्टसाधनं नष्टं पुत्रं अतीर्थीकृतं आगते पात्रे दत्तं वित्तं दुःकीर्तिदुरितापारकं

मदुपहीनां वाचमित्युक्तं विवृणोति यस्यामिति जगतः शोधकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपं
तद्धेतुरूपं लीलावतारेषु ईप्सितं जगतः प्रमास्पदं श्री[illegible]रामकृष्णादिजन्म वा न स्यात् तां निष्फलां गि
रं धीरो धीमान्न धारयेत् २० उक्तं ज्ञानमार्गमुपहरति एवमिति जिज्ञासया विचारेणात्मनि नानात्वभ्रमं देहाद्यध्यासं नि
रस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत् नातः किंचित्कुर्यात् न शास्त्रपाठं स्वमात्रेणेत्यर्थः
२१ यद्यनीशः अशक्तः तर्हि आस्तां मिरं मद्भक्त्यैव कृतान्यपि विध्यसीत्याह मयीति मदर्पणेन २२ कर्मभिर्विशु

यस्यां न मे पावनमंग कर्म स्थित्युद्भवप्राणनिरोधमस्य लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां
गिरं तां बिभृयान्न धीरः २० एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि उपारमेत विरजं मनो
मय्यर्प्य सर्वगे २१ यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलं मयि सर्वाणि कर्माणि निरपेक्षः
समाचर २२ श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः गायन्ननुस्मरन् कर्म जन्म चाभिन
यन्मुहुः २३ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः लभते निश्चलां भक्तिं मय्युद्धव सनातने २४
सत्संगलब्धया भक्त्या मयि मां स उपासिता स वै मे दर्शितं सद्भिरंजसा विंदते पदं २५ उद्धव उवाच
साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता २६ ॥

द्धसत्त्वस्यान्तरंगां भक्तिमाह श्रद्धालुरिति अभिनयन् स्वयमनुकुर्वन् २३ आचरन् सेवमानः २४ ततश्चाने
न प्रकारेण मयि सत्संगेन लब्धया भक्त्या स भक्तः मां उपासिता ध्याता भवति स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चि
तं सुखेनैव मे पदं स्वरूपं प्राप्नोति २५ सत्संगलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च विशेषं पृच्छति साधुरिति सा
धवः स्वस्वमतिपरिकल्पिताः संति बहवः तत्र तु कीदृशः संमतः भक्तिरपि बहुविधा लोके कीदृशी च त्वय्यु
पयुज्येत सद्भिश्च नारदादिभिरादृता २६ रामः रामः रामः

एतच्चकथ्यमानंइदंचातिगुह्यंत्वयैववक्तव्यमितिमेकृपयामाविष्करोतीतिहेउद्धवयथात्वेत्यादिनाब्रह्मादिनियंतः।
२७ अत्रहेतुःत्वमितिव्योमवदसंगःयतःप्रकृतेःपरःस्वेच्छया[illegible]यादुपात्तपृथक्परिमितंवपुर्येनसः २८
तत्रत्रिंशल्लक्षणोःसाधुंनिरूपयतिकृपालुरित्यादिचतुर्भिः कृपालुःपरदुःखासहिष्णुःसर्वदेहिनांकेषांचि
दपिअकृतद्रोहःतितिक्षुःक्षमावान्सत्यंसारःस्थिरंबलंयस्यसः अनवद्यात्मा असूयादिरहितःसुखदुः
खयोःसमःयथाशक्तिसर्वेषामुपकारकः २९ कामैरक्षुभितचित्तःदान्तःसंयतबाह्येंद्रियःमृदुःअक।

एतन्मेपुरुषाध्यक्षलोकाध्यक्षजगत्प्रभो प्रणतायानुरक्तायप्रपन्नायचकथ्यतां
२७ त्वंब्रह्मपरमंव्योमपुरुषःप्रकृतेःपरः अवतीर्णोसिभगवन्स्वेच्छोपात्तपृथग्वपुः
२८ श्रीभगवानुवाच कृपालुरकृतद्रोहस्तितिक्षुःसर्वदेहिनां सत्यसारोनवद्यात्मास
मःसर्वोपकारकः २९ कामैरहतधीर्दान्तोमृदुःशुचिरकिंचनः अनीहोमितभुक्शां
तःस्थिरोमच्छरणोमुनिः ३० अप्रमत्तोगंभीरात्माधृतिमान्जितषड्गुणः अमानीमा
नदःकल्योमैत्रःकारुणिकःकविः ३१ ॥

ठिनचित्तःशुचिःसदाचारःअकिंचनःअपरिग्रहःअनीहःदृष्टक्रियाशून्यःमितभुक्लघ्वाहारःशांतः
नियतांतःकरणःस्थिरःस्वधर्मेमच्छरणःमदेकाश्रयःमुनिःमननशीलः३० अप्रमत्तःसावधानःगंभीरा।
त्मानिर्विकारःधृतिमान्विपद्यप्यकृपणःजितषड्गुणःक्षुत्पिपासेशोकमोहौजरामृत्यूषडूर्मयःएतेजि।
तायेनसः अमानीनमानाकांक्षीअन्येभ्योमानदःकल्यःपरबोधनेदक्षःमैत्रःअवंचकःकारुणिकः।
करुणयैवप्रवर्तमानःनदृष्टलोभेनकविःसम्यक्ज्ञानी ३१ ॥ रामायनमः रामः

रामः

मद्ध्यानविक्षेपतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान् संत्यज्य यद्वा भक्तिदार्ढ्येन विरक्तो ३

किंच मया वेदरूपेणादिष्टानपि स्वधर्मान् संत्यज्य यो मां भजेत सोपि एवंभूतः सत्तमः किमज्ञानान्नास्तिक्याद्वा अधर्माचरणाद्वा धर्मत्यागः धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान् विपक्षे दोषांश्च आज्ञाय ज्ञात्वापि ध्यानविक्षेपकारतया संत्यज्य अथवा विद्धैकादशी कृष्णैकादश्युपवासादेः उपवासो निषेध्यः श्राद्धादयो ये संति विरक्तो धर्मास्तान् संत्यज्येत्यर्थः ३२ किंच यावान् देशकालाद्यपरिछिन्नः यश्च सर्वात्मा यादृशः सच्चिदानन्द विरूपः तं मां ज्ञात्वा अज्ञात्वापि यद्वा विशेषतः पुनः पुनर्ज्ञात्वा एकांतभावेन ये भजंतीति ३३ साधुलक्षण

आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान् धर्मान् संत्यज्य यः सर्वान् मां भजेत स सत्तमः ३२ ज्ञात्वाज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः भजंत्यनन्यभावेन ते मे भक्ततमा मताः ३३ मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनं परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनं ३४ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव सर्वलाभोपहरणं दास्येनात्मनिवेदनं ३५ मज्जन्मकर्मकथनं मम पर्वानुमोदनं गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ३६ यात्रा बलिविधानं च सर्ववार्षिकपर्वसु वैदिकी तांत्रिकी दीक्षा मदीयव्रतधारणं ३७ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ३८ संमार्जनोपलेपाभ्यां सेकमंडलवर्तनैः गृहशुश्रूषणं मह्यं दासवद्यदमायया ३९

= मुक्तं भक्तेर्लक्षणमाह मल्लिंगेत्यष्टभिः लिंगानि प्रतिमादीनि ३४ सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणं ३५ पर्वणां जन्माष्टम्यादीनां अनुमोदनं ३६ बलिविधानं पुष्पोपहारादि समर्पणं सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषु विशेषतः ३७ उद्यानादिकरणे सामर्थ्ये सति स्वतः असति चान्यैः संभूयोद्यमः उद्यानं = पुष्पप्रधानं उपवनं फलप्रधानं वनं आक्रीडं क्रीडास्थानं ३८ संमार्जनं रजोऽपाकरणं उपलेपः गोमयादिना

मेमह्यंनिवेदितेदीपेवलोकंनकुर्यात् बुधः तद्दोषपरिहारार्थंवर्तिद्वयदीपंकुर्यात् ॥

७६

स्वयमन्येननिवेदितंस्वीकुर्यात् एतच्चस्थावरमूर्तिविषयकंसाधारणस्थावरविषयंरागप्राप्तविषयंवाभक्त्या
तुप्राप्त्यमेवषड्विंशोपचारैस्तुपरिकल्पितंविशेषोनैवेद्यविशेषेणतुयत्तद्गुडजंलोकलोलुपदिरूपंमुखेननाम
नैवेद्यमुद्धरेद्धरेः पादोदकंचनिर्माल्यंमस्तकेयस्यसोऽच्युतइत्यादिवचनेभ्यः यद्वाअन्यस्मैनिवेदितंमेनोपयुञ्ज्यात्
मह्यंननिवेदयेदित्यर्थः विष्णोर्निवेदितान्नेनयष्टव्यंदेवतान्तरंपितृभ्यश्चापितद्देयंतदानन्त्यायकल्पतेपितृशेषं

ग्रासेन =

अमानित्वमदंभित्वंकृतस्यापरिकीर्तनं अपिदीपावलोकंमेनोपयुञ्ज्यान्निवेदितं ५०
यद्यदिष्टतमंलोकेयच्चातिप्रियमात्मनः तत्तन्निवेदयेन्मह्यंतदानन्त्यायकल्पते ५१
सूर्योग्निर्ब्राह्मणागावोवैष्णवः खंमरुज्जलं भूरात्मासर्वभूतानिभद्रपूजापदानिमे ५२
सूर्येतुविद्ययात्रय्याहविषाग्नौयजेतमां आतिथ्येनतुविप्राग्र्येगोष्वंगयवसादिना ५३ वै
ष्णवेबंधुसत्कृत्याहृदिखेध्याननिष्ठया वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः ५४
स्थंडिलेमंत्रहृदयैर्भोगैरात्मानमात्मनि क्षेत्रज्ञंसर्वभूतेषुसमत्वेनयजेतमां ५५ ॥

तयोरध्याहरयेपरमात्मनेरेतोदाः पितरस्तस्यभवंतिक्लेशभागिनइत्यादिवचनेभ्यः ५०।५१ इदानीमेकादशपू
जाधिष्ठानान्याहसूर्यइतिहेभद्र ५२ अधिष्ठानभेदेनतदाराधनान्याहसूर्यइतित्रिभिः त्रय्याविद्ययासूक्तैरुपस्था
नादिना अंगहेउद्धवयवसादिना ५३ बंधुसत्कृत्याबंधुसम्मानेनहृदिखेहृदयाकाशेमुख्यधियाप्राणदृष्ट्या
तोयेतोयादिद्रव्यैस्तर्पणादिना ५४ स्थंडिलेभुविमंत्रहृदयैरहस्यमंत्रन्यासैः ५५ ॥

राम:

सर्वः धिष्ण्यानेषु ध्येयमाह धिष्ण्येष्वेष्विति इति अनेन प्रकारेण एषु धिष्ण्येषु ४६ उक्तायाः भक्तेः फलमाह इष्टापू
र्तेनेति सद्भक्तिं दृढां भक्तिं अस्या भक्तेरन्तरंगसाधनमाह इत्थं च मत्स्मृतिः साधुसेवया भवति यद्वा स्मृतिर्ज्ञानं
तत्र च दृढभक्तिमतः उद्धवः साधुसेवया मत् ज्ञानं भवतीत्यर्थः ४७ ज्ञानभक्तिमार्गावुक्तौ तत्र ज्ञानमार्गादपि भ
क्तिमार्गः श्रेष्ठ इत्याह प्रायेणेति सत्संगेन यो भक्तियोगः तेन विना उपायः संसारतरणे न विद्यते सत्संगेनेत्यत्र
हेतुमाह हि यस्मात् सतामहं प्रायणं प्रकृष्टमयनं आश्रयः अतः सत्संगो मय्यन्तरंग इत्यर्थः ४८ इदानीं सा

धिष्ण्येष्वेष्विति मद्रूपं शंखचक्रगदाम्बुजैः युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत् समाहितः ४६ इ
ष्टापूर्तेन मामेवं यो यजेत समाहितः लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ४७ प्रायेण
भक्तियोगेन सत्संगेन विनोद्धव नोपायो विद्यते सम्यक् प्रायणं हि सतामहं ४८ अथैतत्परमं
गुह्यं शृण्वतो यदुनन्दन सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ४९ इति श्रीभागवते
एकादशस्कंधे भगवदुद्धवसं०ए०ध्यायः ११ श्रीभगवानुवाच न रोधयति मां योगो न सांख्यं ध
र्म एव च न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा १ ॥

स्वयोगा[illegible]दीनि साधनान्तरसव्यपेक्षा।
णि सव्यभिचाराणि च भवंति सत्संगस्तु स्वतंत्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह अथेति एतद्व
र्माणां परमं गुह्यं अतः शृणु इत्यर्थः ४९ एकादशे एकादशः ११ द्वादशे साधुसंगस्य महिमा वर्णितः पुरा कर्मानुष्ठा
नत्यागश्च वर्ण्यते ततः परं १ न रोधयति न वशीकरोति योगः आसनप्राणायामादिः सांख्यं तत्त्वानां विवेकः ध
र्मः सामान्यतो अहिंसादिः स्वाध्यायो वेदजपः तपः कृच्छ्रादि त्यागः संन्यासः इष्टापूर्तं इष्टं च पूर्तं च तत्र इष्टं अग्नि
होत्रादि [illegible] पूर्तं कूपारामादिनिर्माणं दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते १ रामः रामः रामः

स्प:

व्रतानि एकादश्युपवासादीनि यज्ञः देवपूजा छंदांसि रहस्यमंत्राः अवरुंधे वशीकरोति २ यातुधाना राक्षसाः ३ ॥४ त्वाष्ट्रो वृत्रः कयाधुनाम्नी दानवी तस्या अपत्यं कायाधवः प्रल्हादः ५ ऋक्षो जांबवान् गजो गजेन्द्रः गृध्रो जटायुः वणिक्पथस्तुलाधारः व्याधो धर्मव्याधः यज्ञपत्न्यः दीक्षितभार्याः ६ तेषां सत्संगव्यतिरिक्तसाधनांतराभावमाह तेनेति न अधीताः श्रुतिगणा यैः न उपासिता महत्तमा यैस्तथा किंच अव्रता न अतप्ततपसः न व्रतानि नियमा न तप्तानि तपांसि यैः ते च ते पासत्संगादिति सद्भिः संगो नाम ममैव संग इत्यभिप्रायोक्तेः यद्वा स्वसंगस्यापि सत्संगत्व

व्रतानि यज्ञः छंदांसि तीर्थानि नियमा यमाः । यथावरुंधे सत्संगः सर्वसंगापहो हि मां २
सत्संगेन हि दैतेया यातुधाना खगा मृगाः । गंधर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ३
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोंत्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेन
घ ४ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ५ सु
ग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ६ तेना
धीतश्रुतिगणा नोपासितमहत्तमाः । अव्रतातप्ततपसो मत्संगान्मामुपागताः ७ केवलेन हि भावे
न गोप्यो गावो नगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ८ ॥

विवक्षितत्वस्यापि सत्त्वात् यद्वा मदीयसंगादित्यर्थः ७ तत्र वृत्रादीनां भवतु नाम कथंचित्साधनांतरं गोपीप्रभृतीनां तु नास्त्येवेत्याह केवलेनेति । सत्संगलब्धेन केवलेनैव भावेन प्रीत्या नगाः यमलार्जुनादयः नागाः कालीयादयः यद्वा तदानींतनसर्वतरुगुल्मादीनामपि भगवत्प्राप्तिरस्तीति गम्यते तदुक्तं भगवते अहो अमी देववरामरार्चितं पादांबुजं ते सुमनःफलार्हणं । नमंत्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतमित्यादि सिद्धाः कृतार्थाः संतः ईयुः प्रापुः ८ ॥

स्वप्राप्तेर्दुर्लभतामाह यमिति योगादिभिः कृतप्रयत्नोपि यं न प्राप्नुयात् तं मामीयुरिति पूर्वेणान्वयः अत्र च।
प्रथमं या गोप्यः पश्चादपि वा सार्थिकत्वेन सह संगताः तेषां तत्संसर्गो अन्येषां सत्संगः तेन च तेषां भक्तिरिति ज्ञातव्यं
गोपीनां भावं वर्णयति रामेणेति चतुर्भिः श्वाफल्किना अक्रूरेण मथि प्रणीते सति मे मत्तोन्यं सुखाय न दद
शुः कुतः वियोगेन तीव्रो दुःसह आधिर्यासां ताः अत्र हेतुः मय्यविगाढेन अतिदृढेन भावेन प्रेम्णा अ
नुरक्तानि संसक्तानि चित्तानि यासां ताः १० तीव्राधित्वं वर्णयति तास्ता इति मया सह याश्च ताः क्षपाः रात्रयः

यं न योगेन सांख्येन दानव्रततपोध्वरैः व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवान
पि ९ रामेण सार्द्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः विगाढभावेन न मे वियोग
तीव्राधयोन्यं ददृशुः सुखाय १० तास्ताः क्षपाः प्रेष्ठतमेन नीताः मयैव वृंदावनगोचरेण क्ष
णार्द्धवत्ताः पुनरंग तासां हीना मया कल्पसमा बभूवुः ११ ता नाविदन्मय्यनुषंगबद्धधियः
स्वात्मानमदस्तथेदं यथा समाधौ मुनयोब्धितोये नद्यः प्रविष्टा इव नामरूपे १२ मत्कामा
रमणं जारमस्वरूपविदोबलाः ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः १३ ॥

क्षणार्द्धवन्नीतास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः कथंभूतास्तास्ताः वाचमगोचरा इत्यर्थः ११ किंच
एवं तीव्राधयस्ता मोहमिषेण समाधिं प्राप्ता इत्याह ता इति मयि अनुषंगेण आसक्त्या बद्धा धियो याभिस्ताः स्वात्मा
नं स्वदेहं अदः दूरस्थं इदं संनिहितं च नाविदन् यद्वा स्वपतिपुत्रादिममतास्पदं आत्मानं अहंकारास्पदं अदः
परलोकं इदं इमं लोकं च नाविदन्निति यथा मुनयः समाधौ नामरूपे न विदुः तद्वत् किंतु अब्धितोये नद्य इ
व मयि प्रविष्टा इत्यन्वयः १२ एवं ता अबलाः केवलं मत्कामाः अस्वरूपविदः स्वरूपं तु न जानंति तथा
पि सत्संगाज्जारं ब्रह्म जारबुद्धिवेद्यमपि तत्स्वरूपमेव मां परमं प्रापुरित्यर्थः १३ ॥ ॥

यस्मादेवं मत्तो मद्भजनप्रभावः तस्मात्त्वं चोदनां श्रुतिं प्रतिचोदनां स्मृतिं च यद्वा विधिं च निषेधं च उत्सृज्य परि
त्यज्य मां शरणं याहि मयैवाकुतोभयः स्याः भवः ॥१४॥१५॥ पूर्वं तावन्मध्येयोदितेष्ववहितः स्वधर्मेष्वित्या।
दिना कर्म कर्तव्यमित्युक्तं इदानीं तु तत्सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते तत्र किमात्मनः कर्तृत्वाद्यस्ति ना।
स्ति वेत्यात्मस्थः आत्मविषयः संशयो न निवर्तते यद्वा कर्म कार्यं त्याज्यं वेत्यात्मस्थः हृदिस्थः संशयो न नि।
वर्तत इति येन संशयेन ॥१६॥ उत्तरं स एष इत्यष्टभिः अयं भावः ईश्वरस्तावत्स्वमायावशात्प्रपंचात्मना भासित

तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनां प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥१४॥ मा
मेकमेव शरणमात्मानं सर्वदेहिनां याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥१५॥ उ
उद्धव उवाच संशयः शृण्वतो वाचं तव योगेश्वरेश्वर न निवर्तत आत्मस्थो येन भ्राम्य
भ्राम्यति मे मनः ॥१६॥ श्रीभगवानुवाच स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गु

प्रपंचाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादितो विधिप्रतिषेधाधिकारस्तदानीं सत्त्वशुद्ध्यर्थं कर्म
णा कुर्विन्नित्युक्तं सत्त्वे च शुद्धे पुनः कर्मजादुःखपरिहाराय भक्तिविक्षेपकं कर्मादरं परित्यज्य दृढविश्वासेन भ
जेत्युक्तं ज्ञातापि तु विद्यायोनिं किंचित्कर्तव्यमस्तीति तत्र तावदीश्वराद्वारादींद्रियद्वारा जीवसंसृतिका
रणभूतं प्रपंचोद्गममाह सार्द्धैस्त्रिभिः स एष अपरोक्षः जीवयतीति जीवः परमेश्वरः अपरोक्षत्वे हे
तुः विवरेषु आधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह घोषेणेति।
घोषेण परारव्येन नादरूपेण प्राणेन सह गुहां आधारचक्रं प्रविष्टः सन् ॥ ॥ ॥

मनोमयंसूक्ष्मंरूपंपश्यंत्याख्यंमध्यमाख्यंचमणिपूरकचक्रेविशुद्धिचक्रेचउपेत्यप्राप्यवक्त्रे।
मात्राह्रस्वादिःस्वराउदात्तादिःवर्णाःअकारादिरित्येवंवैखर्याख्यःस्थविष्ठःअतिस्थूलोनानावेदशा
खात्मकोभवतितथाचश्रुतिःचत्वारिवाक्परिमितपदानितानिविदुर्ब्राह्मणायेमनीषिणःगुहानित्री
णिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंतीति अभियुक्तश्लोकश्चयास्तामित्रावरुणसदनादुच्चरं
तीत्रिषष्टिंवर्णानंतःप्रकटकरणैःप्राणसंगात्प्रसूतेतांपश्यंतींप्रथममुदितांमध्यमांबुद्धिसंस्थांवाचंवक्त्रे

मनोमयंसूक्ष्ममुपेत्यरूपंमात्रास्वरोवर्णइतिस्थविष्ठः १८ यथानलःखेनिल
बंधुरूष्मावलेनदारुण्यधिमथ्यमानः अणुःप्रजातोहविषासमिध्यतेतथैवमेव्यक्ति
रियंहिवाणी १९ एवंगदिःकर्मगतिर्विसर्गोघ्राणोरसोदृक्स्पर्शःश्रुतिश्च संकल्पवि
ज्ञानमथाभिमानःसूत्रंरजःसत्वतमोविकारः २० ॥

करणविशदांवैखरींचप्रपद्यइति १८ अव्यक्त
स्यसतःसूक्ष्ममध्यमक्रमेणाभिव्यक्तौदृष्टांतःयथेतियथाग्निःखेउष्मा अव्यक्तोष्मरूपःदारुणि आधिक्ये
मथ्यमानःअनिलसहायःसन् अणुःसूक्ष्मविस्फुलिंगादिरूपोभवतिपुनःप्रकृष्टोजातोहविषासंवर्द्धते।
तथैवेयंवाणीममाभिव्यक्तिः १९ उक्तांवाग्व्यक्तिमुपसंहरन्नितरेंद्रियव्यक्तिश्चातिदिशतिएवंगदिःगदनंभाष
णंमेव्यक्तिरित्युपसंहारःगदिर्वाणीवागिंद्रियस्यवृत्तिः कर्महस्तयोर्वृत्तिःगतिःपादयोःविसर्गःपायूप
स्थयोरितिकर्मेंद्रियाणांघ्राणः अवघ्राणंरसोरसनंदृक्दर्शनंस्पर्शःस्पर्शनंश्रुतिःश्रवणमितिज्ञा
नंबुद्धिचित्तयोःअभिमानोऽहंकारस्यसूत्रंप्रधानस्यसत्वरजस्तमसांविकारोऽधिदैवादिस्त्रिविधःप्र
पंचःमेव्यक्तिरितिपूर्वेणान्वयः २० ॥ रामः ॥

तस्मादीश्वराभिव्यक्तिरूपः प्रपंचो नेश्वराद्भिन्नोस्तीत्याह अयमिति अयं जीव ईश्वरः आद्य अव्यक्त एक एव वयसा कालेन विश्लिष्टा विभक्ता वागादींद्रियरूपाः शक्तयो यस्य यद्वा विशेषेणाश्लिष्टा आलिंगिता मायाशक्तिर्येन सः बहुप्रकार इव भाति यतः स एव आद्यः त्रिवृत् त्रिगुणात्मकः अब्जयोनिः लोकपद्मस्य कारणभूतः एकस्य बहुधाभाने दृष्टांतः योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वदिति २१ तस्मात्तन्मायाविलसितत्वात्तदाश्रयमिदं जगन्न ततः पृथगिति सदृष्टांतमाह यस्मिन्निति तंतुवितानेन संस्थितिर्यस्य सः पटो यथा तथा यस्मिन्निदं विश्वं ओतं दीर्घतंतुषु पट इव प्रोतं तिर्यक्तंतुष्विव एवंभूतं समष्टि

अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् २१ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तंतुवितानसंस्थः य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते २२ द्वे अस्य बीजे शतमूलस्त्रिनालः पंचस्कंधः पंचरसप्रसूतिः दशैकशाखो द्विसुपर्णनीडः।
त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः २३॥ सृष्ट्यात्मकं विश्वमविद्ययात्मन्यध्यस्तं व तद्रूपं जीवस्य कर्तृत्वादि संसारहेतुः अतस्तद्विवेकज्ञानेन कर्मादि सर्वं साज्यमित्युक्तमित्याशयेनाह य एष इति सार्द्धाभ्यां त्रिभिः पुराणः अनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले भोगापवर्गौ कर्मतत्फले वा प्रसूते जनयति २२ ब्रह्मरूपं कं प्रपंचयति द्वे इति द्वे पुण्यपापे अस्य बीजे स च शतमूलः शतं अपरिमिताः वासना मूलानि यस्य त्रयो गुणा नालानि प्रकांडा यस्य पंच भूतानि स्कंधा यस्य पंच रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् दश च एका च शाखा इंद्रियाणि यस्य द्वयोः सुपर्णयोः जीवपरमात्मनोर्नीडं वासो यस्मिन् त्रीणि वल्कलानि त्वचः वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे फले यस्य सः अर्कं प्रविष्टः सूर्य

तत्फलभोक्तृनाह गृध्यंतीति गृध्राः कामिनः ग्रामेचरा गृहस्थाः अस्य वृक्षस्यैकं फलं दुःखमदन्ति प
रिणामतः स्वर्गादेरपि दुःखरूपत्वात् हंसा विवेकिनो अरण्यवासाः संन्यासिन एकं फलं सुखमदन्ति एकं।
परमात्मानं मायामयमेव बहुरूपं इज्यैः पूज्यैः गुरुभिः कृत्वा यो वेद तत्वापि वेद वेदं २४ त्वं चैवं ज्ञात्वा कृतकृत्यः
सन् सर्वसाधनं त्यजेत्याह एवमिति एकांतभक्त्या शितेन तीक्ष्णेन ज्ञानकुठारेण स्वतंत्रभावो वा द्वयोः जीवो यथि
त्रिगुणात्मकं लिंगशरीरं विवृश्च्य छित्वा परमात्मानं संपद्य प्राप्य अथ अस्त्रं साधनं त्यजेति २५ एकादशे द्वादशः १२

अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः हंसा य एकं बहुरूपमिज्यैर्मायाम
यं वेद स वेद वेदं २४ एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः विवृश्च्य जीवाश
यमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रं २५ इति श्रीभागवते म० ११ भगवदुद्धवसंवादे द्वाद
शोध्यायः १२ श्रीभगवानुवाच सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः सत्वेनान्यतमौ हन्यात्
सत्वं सत्वेन चैव हि १ सत्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः सात्विकोपासया सत्वं त
तो धर्मः प्रवर्तते २ ॥ त्रयोदशे पुनः सत्वस्य वृद्ध्या विद्यादयक्रमः हंसेतिहासतश्चित्तगुणाविश्लेषवर्णनं १

विद्याकुठारेण जीवाशयं विवृश्च्य साधनं त्यजेत्युक्तं तत्र तमआदिगुणत्रयवृत्तिप्रतिबंधे सति कथं विद्योत्पत्तिरि
त्याशंक्य तन्निवृत्त्या विद्योत्पत्तिप्रकारमाह सत्वमिति सप्तभिः तत्रयनं दादिवृद्दात्मधर्मा गुणाः स्युस्तर्हि तत्स्वरूपत्वा
त्तेषां निवृत्तिर्न स्यात् न त्वेतदस्तीत्याह बुद्धेः प्रकृतेरेते गुणाः न त्वात्मनः इति अतः सत्वेन वृद्धेनान्यतमौ हन्यात् र
जस्तमोवृत्ती जयेदित्यर्थः सत्वं च सत्वं दयादिवृत्तिरूपमुपशमात्मकेन सत्वेनैव हन्यात् १ ननु गुणत्रयवृत्तौ।
नापरस्परोपमर्दरूपत्वात् कथं सत्ववृद्ध्यै वेतरवृत्तयो नियमेन हन्तव्याः तत्राह सत्वादिति मद्भक्तिलक्षणो यो धर्मः
स भक्तिरूप एव वा सत्वमेव कथं वर्द्धेत तत्राह सात्विकानां पदार्थानामुपासया सेवया सत्वं वृद्धं भवतीत्यर्थः २

श्री २

सचधर्मोरजस्तमश्चहन्यात्कुतः नविद्यतेउत्तमोयस्मात्सः सर्वोत्तमः यतः सत्ववृद्धिः सत्वस्यवृद्धिर्यस्मिन्का
रणेसः अतएवतत्कार्योऽधर्मप्रतिबंधोपिनास्तीत्याह तस्मिन्उभयस्मिन्हतेतन्मूलस्तेरजस्तमसीरागादि।
र्मादिनाप्रमादालस्यादिनाचमूलंयस्यसः ३ सात्विकोयासनयासत्ववर्द्धतेस्तुकेनानेवैसत्ववृद्धिहेतून्दर्शयि
तुंसामान्यतोगुणत्रयवृद्धिहेतूनाह आगमः शास्त्रं अपः आपः क्वचिदागमोऽपइतिपाठः ४ एषुसात्विकादिनि
र्णयमाह एषामेवमध्येप्रचक्षतेप्रशंसंतितत्सात्विकंयद्यन्निंदंतितत्तत्तामसंयत्तुनेदूरूपेक्षितंनस्तुतंनचनि
न्दितंतद्राजसं ५ सात्विकान्येवेतिनिवृत्तिशास्त्राण्येवसेवेतनतुप्रवृत्तिपरंउशास्त्राणीतीयावदेवनगोदक।

धर्मोरजस्तमोहन्यात्सत्ववृद्धिरनुत्तमः आशुनश्यतितन्मूलोह्यधर्मउभयेहते ३
आगमोऽपःप्रजादेशःकालःकर्मचजन्मच ध्यानंमंत्रोऽथसंस्कारोदशैतेगुणहेतवः
४ तत्सात्विकमेवैषांयद्यद्वृद्धाःप्रचक्षते निंदंतितामसंतत्तद्राजसंतदुपेक्षितं ५ सात्वि।
कान्येवसेवेतपुमान्सत्वविवृद्धये ततोधर्मस्ततोज्ञानंयावत्स्मृतिरपोहनं ६ ॥

शुद्धाःप्रजाजनाःनिवृत्तान्जनान्नप्रवृत्तदुराचारान्विविक्तदेशंनरंथ्याद्युत्तदेशान्कालंब्राह्ममुहूर्ता
दिकंध्यानादौनप्रदोषनिशीथादीन्कर्मचनित्यंनकाम्याभिचारादिनिजन्मवैष्णवशैवदीक्षालक्षणंनशा।
क्तंतुदीक्षारूपध्यानेश्रीविष्णोःनकामिनीविद्विषांमंत्रप्रणवादिकंनकाम्यक्षुद्रान्संस्कारंआत्मनः शुं
शोधकंनतुकेवलंदेहगृहादीनांनतुज्ञानंमहावाक्यश्रवणादेवोत्पद्यतेकिंतत्रसत्ववृद्ध्याधर्मेणवा इ
अतआहयावत्स्मृतिः आत्मापरोक्षंयावच्चदेहद्वयतत्कारणभूतगुणापोहःतावत्पर्यंतेज्ञानंभवति।

णमः

ननुगुणव्यतिकराज्जातोदेहःकथंस्वाश्रयभूतान्गुणान्स्वतएवोत्पन्नयाविद्ययापोह्यस्वयमप्युपरमेत
तत्राहवेणुसंघर्षणाज्जातोऽग्निर्यथास्वतएवोत्पन्नाभिर्ज्वालाभिस्तद्वनंसर्वंदग्ध्वास्वयंशाम्यतिएवंदे।
होपितत्क्रियःतस्याऽग्नेरिवक्रियाव्यापारोयस्यसः ७ ननुनियतेंद्रियतयासात्विकसेवायामियानस्तिपुरुषा।
र्थःतथापिराजसादीन्विषयान्दुःखमितिजानंतोपिकथंसेवंतइतिपृच्छतिविदंतीतिपदस्यानेनान्वयो
यथाभर्त्स्यमानाअपिखरायथापादाभ्यांताड्यमानाअपिखरीमनुधावंतःअजायथानिर्लज्जाःहन्यमानाइति।

वेणुसंघर्षजोवह्निर्दग्ध्वाशाम्यतितद्वनं । एवंगुणव्यत्ययजोदेहःशाम्यतितत्क्रियः ७
उद्धवउवाच विदंतिमर्त्याःप्रायेणविषयान्पदमापदां। तथापिभुंजतेकृष्णतत्कथंश्वखरा
जवत् ८ श्रीभगवानुवाच अहमित्यन्यथाबुद्धिःप्रमत्तस्ययथाहृदि उत्सर्पतिरजोघोरंत
तोवैकारिकंमनः ९ रजोयुक्तस्यमनसःसंकल्पःसविकल्पकः ततःकामोगुणध्यानाद्दुः
सहःस्याद्धिदुर्मतेः १० करोतिकामवशगःकर्माण्यविजितेंद्रियः दुःखोदर्काणिसंपश्यन्रजो
वेगविमोहितः ११ ॥

अपितद्वत् ८ मिथ्याभिनिवेशेनभुंजतइतिसहेतुकमाह अहमितित्रिभिः
प्रमत्तस्यविवेकशून्यस्यस्वदेहादावहमितिमिथ्याबुद्धिर्हृदियथावदुत्सर्पतिततोहेतुतःवैकारिकंसत्व
प्रधानमपिमनःप्रतिघोरंदुःखात्मकंरजउत्सर्पतिमनोव्याप्नोतीत्यर्थः ९ इदमेवइदमेवंभोग्यमिति
सविकल्पःसंकल्पःस्यात्ततश्चअहोरूपमहोभावइतिगुणध्यानाद्दुर्धरःकामःस्यात् १० ततोवि
षयान्भोक्तुंकर्माणिकरोति ११ रामः ॥ ॥ ॥

मा०ए०

५१

एवं चेत्तर्हि कस्यापि दुःखनिवृत्तिः स्यादित्याशंक्याह यद्यपीति रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान्
विवेकी पुनर्मनो निरुंधन्न सज्जते १२ विषयदोषदृष्ट्यापि मनोनिरोधाशक्तौ पुरुषं तन्निरोधोपायमाह अप्रम
त्त इति अनिर्विण्णः अनलसः यथाकालं त्रिषवणामपि परमानंदरूपे पर्ययन् समादध्यात् १३ विषयैः संप्र
थितस्य मनसस्तद्वियोगेन स्वरूपनिष्ठत्वमसंभावितं मन्यमानं प्रति तन्निरूपणायेतिहासमुपक्षिपति
एतावानिति यथावन्मय्यावेश्यत इत्येतावानित्यर्थः १४ मच्छिष्यैरित्युक्ते तेषामतिज्ञापयसामने।

प९

रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः अतंद्रितो मनो युंजन् दोषदृष्टिर्न सज्जते १२
अप्रमत्तो नियुंजीत मनो मय्यर्पयन् छनैः अनिर्विण्णो यथाकालं जितश्वासो जितासनः १३
एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा
१४ उद्धव उवाच यदा त्वं सनकादिभ्यो येन रूपेण केशव योगमादिष्टवानेतद्रूपमिच्छा
मि वेदितुं १५ श्रीभगवानुवाच पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः पप्रच्छुः पित
रं सूक्ष्मां योगस्यैकांतिकीं गतिं १६ सनकादय ऊचुः गुणेष्वाविशते चेतो गुणाश्चेतसि

ति१

च प्रभो कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः १७ ॥ नरूपेणानिरूपणासंभवात्पृच्छति यदे
ति तं कालं तदेतद्रूपं च वेदितुमिच्छामि तत्कथयेति १५ मानसाः मनोभवाः पुत्राः सूक्ष्मां दुर्ज्ञेयाम् एकांति
कीं गतिं परां काष्ठां १६ तदेवाह गुणेष्विति विषयेषु स्वभावतो रागादिवशाच्चेतः प्रविशति ते चानु
भूता विषया वासनारूपेण चेतसि प्रविशंति अतितितीर्षोः विषयानतिक्रमितुमिच्छोः १७

रामः

५१

एवमिति महानपि देवोऽपि स्वयंभूरपि भूतानां स्रष्टापि ध्यायमानः विचारयन्नपि प्रश्नस्य बीजं यदज्ञानात् अयं प्र
श्नः तन्नाविन्दत यतः कर्मविक्षिप्तधीः १८ प्रश्नस्य पारमन्तमभिप्रायो वा तस्य तितीर्षया जिज्ञासया हे सरू
पेणेति यथाहंसो नीरं क्षीरं च पृथक्कर्तुं शक्तः एवमहं गुणात्मत्वात्मविविक्तं द्योतयितुं हंसरूपेणागतोऽस्मीति १९ दृ
ष्ट्वेति २० इत्यहं मुनिभिः पृष्ट इति पृथक्वाक्यं यदवोचमिति च पृथक् अतो न सच्छब्दस्य वैयर्थ्यमिति दोषः तेभ्यो यदवो
चं [illegible] तन्मे वचनं निबोध २१ देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वरूपमेव विषयं चेत

श्रीभगवानुवाच एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ध्यायमानः प्रश्नबीजं नाभ्य
पद्यत कर्मधीः १८ समाप्तचिन्तयद्देवः प्रश्नपारतितीर्षया तस्याहं हंसरूपेण सकाश
मगमं तदा १९ दृष्ट्वा मां त उपाव्रज्य कृत्वा पादाभिवन्दनं ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को
भवानिति २० इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा यदवोचमहं तेभ्यस्तदुद्धव निबो
ध मे २१ वस्तुनो यद्यनानात्व आत्मनः प्रश्न ईदृशः कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः
२२ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः २३

सोऽपि विज्ञेयो भवतीति वक्तुं प्रश्नं खण्डयन्निषेधो वा तावदात्मानात्मविवेकमाह वस्तुन इति त्रिभिः किमात्म
नोऽयं प्रश्नः तद्व्याधर्म तत्संघस्य वा यद्यात्मनः तर्हि तस्य वस्तुनः परमार्थरूपस्य अनानात्वे सति हे विप्रा वः
युष्माभिः कृत ईदृशः प्रश्नः वक्तृषु निर्धारणारूपः कथं घटेत वक्तुः उत्तरदातुर्वा मम क आश्रयः आवि
शेषे आत्मनि जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामि यथा २२ भूतसंघविषयत्वेऽपि अयं प्रश्नः
वाचारम्भः वाङ्मात्रेणारब्धः यतोऽनर्थकः कुतः भूतेषु स्वमनुष्यादिदेहेषु पञ्चभूतात्मकेषु अतः समा
नेषु अभिन्नेषु उन्नतवस्तुतः परमकारणात्मना अभिन्नेषु वाचारम्भणं विकारो नामधेयमिति श्रुतेः।

तत्रप्रपंचात्मकत्वंप्रपन्नादिसिद्धमेवेतिपरकारणमेवमेवोपपादयति मनसेति मन आदिभिर्यद्गृह्य
तेतत्तदहमेवेत्यर्थः अंजसातत्वविचारेणएतेनैवसर्वात्मकोहमित्यंजसाप्युत्तरमुक्तंभवति २३ एवं
प्रश्नखंडेनमिथोगुणात्मस्वरूपंसामान्यतोनिरूप्य ब्रह्मणोपि दुःपरिहरं यत्पृष्टं तत्रोत्तरमाह गुणेष्वि
त्यादिनायावदध्यायसमाप्ति अयमभिप्रायः यदिकर्तृत्वभोक्तृत्वादिरूपतयाविषयैःसंग्रथितंचित्तंबुद्ध्या
दिशब्दवाच्यमेवजीवस्यस्वरूपंभवेत ततस्तद्वियोगोनघटेतनस्यात्तुस्वरूपमहंब्रह्मैवचित्ताध्यासः।
नतुतत्स्वभावतयाविषयैःसंग्रथितंअतःस्वस्यब्रह्मत्वभावनयाविषयाणांचमिथ्यात्वानुसंधानेन।

मनसावचसादृष्ट्यागृह्यतेन्यैरपींद्रियैः अहमेवनमत्तोन्यदितिबुध्यध्वमंजसा
२४ गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रजाः जीवस्यदेहउभयंगुणाश्चेतोम
दात्मनः २५ गुणेषुचाविशच्चित्तमभीक्ष्णंगुणसेवया गुणाश्चचित्तप्रभवामद्रूप
उभयंत्यजेत २६ जाग्रत्स्वप्नःसुषुप्तंचगुणतोबुद्धिवृत्तयः तासांविलक्षणोजीवः
साक्षित्वेनविनिश्चितः २७॥

सर्वतोनिर्विषयमगवंतंभजतोभवत्येवपरिपूर्णस्वरूपावस्था
नमितिहेप्रजाःपुत्रिकाःसत्त्वंगुणेषुचेतआविशतिगुणाश्चतस्मिन्नेवगुणाश्चेतश्चोभयंग्रथितमदा
त्मनोब्रह्मस्वरूपस्यजीवस्यदेहःअध्यस्तउपाधिःनतुस्वरूपं २५ तस्मात्अभीक्ष्णंपुनःपुनर्गुणसे
वयातत्संस्कारेणगुणेष्वाविशच्चित्तंतथाचगुणवासनारूपेणचित्तेप्रविष्टाभवंतीतितथाभूतगुणांश्चि
त्तंचएवंउभयमपिमद्रूपःसन्त्यजेत २६ ननुजाग्रदाद्यवस्थावतःकुतःकूटस्थत्वरूपतातत्राहजाग्रत
जागरःस्वप्नःसुषुप्तंचेतिबुद्धेर्वृत्तयःतास्तुनस्वाभाविक्यःकिंतुसत्वाज्जागरणंविद्याद्रजसास्वप्न
मादिशेत्प्रस्वापंतमसाजंतोस्तुरीयंत्रिषुसंततमितिवक्ष्यमाणक्रमेणगुणतएवं वृत्तिविलक्षणःत

जी

ननु र्हि कथमहं जागर्मीत्यादि प्रतीतिः तत्राह यर्हीति यर्हि यस्मात् सम्यक् सृतिः सरणमनयेति संसृतिः
बुद्धिः तया बंधोयमात्मनो गुणवृत्तीर्ददातीति तस्मान्मयि तुर्ये स्थितः सन् इमं संसृतिबंधं जह्यात् ततस्त
द्गुणचेतसां गुणानां चेतसश्चान्योन्यं त्यागो भवति २८ कथं संसृत्या बंधः कथं च तं जह्यात् तत्राह अ
हंकारेण कृतं बंधं आत्मनः अर्थविपर्ययं आनंदाद्यावरणेनानर्थहेतुं विद्वान् जानन् सन् निर्वि
द्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिंतां संसारे बुद्धिः तस्मिन् चिंता अभिमानं तत्कृतां

यर्हि संसृतिबंधोयमात्मनो गुणवृत्तिदः मयि तुर्ये स्थितो जह्यात् त्यागस्तद्गुणचेतसां
२८ अहंकारकृतं बंधमात्मनोर्थविपर्ययं विद्वान्निर्विद्य संसारचिंतां तुर्ये स्थितस्त्य
जेत् २९ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः जागर्त्यपि स्वपन्नज्ञः स्वप्ने जा
गरणं यथा ३० असत्वादात्मनोन्येषां भावानां तत्कृता भिदा गतयो हेतवश्चास्य मृषा
स्वप्नदृशो यथा ३१ ॥

भोगचिंतां च त्यजेदिति २९ यावदेवं न त्यजेत् तावत्तस्य कर्मज्ञानादिस
वैयर्थ्यमित्याह यावदिति यद्यपि जागर्ति कर्मादिषु तथापि स्वपन् पश्यन्निव भवति यतोज्ञः असम्यग्दर्शी
अजागरस्य स्वप्नत्वे दृष्टांतः स्वप्न इति ३० ननु कथं वेदप्रमितवर्णाश्रमकर्मादिना नार्थधीर्निवर्तेत त
त्राह असत्वादिति भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः
कर्माणि चास्यात्मनो मृषा अविद्यावद्विषयो वेद इति भावः ३१ ॥ ॥ ॥

तस्मात्ततो दृश्याद्दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् तेनैव स्वार्थं च निवृत्ततृष्णः तूष्णीं निरीह
श्च भवेत् मनोवाक्कायव्यापाररहित इत्यर्थः ननु देहवतः सर्वथा दृष्टिप्रतिनिवर्तनायोगात्पुनः संसारः
स्यादेव तत्राह संदृश्यत इति क्वचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या त्यक्तत्वात्
तस्मान्न मोहाय न भवेदेव किंतु देहपातपर्यन्तं स्मृतिमात्रं स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः ३५
एतदेवोपपादयति देहमिति आसनादुत्थितं उत्थाय गतं तत्रैवावस्थितं वा ततः क्वचिदपेतं निर्गतं उत तत्रै

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः संदृश्यते क्व
च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ३५ देहं च नश्वरमवस्थित
मुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं दैवादपेतमुत दैववशादुपेतं वासो यथा
परिकृतं मदिरामदांधः ३६ देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमीक्षत
एव सासुः तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ३७ ॥

वोपेतं वा देहमपि वा नानुसंधत्ते कुतोऽन्यत् यतः येन देहेन स्वरूपमध्यगमत् ज्ञातवान् तं देहं यतः कार।
णादिति वा परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत् ३६ ननु च यः परिपाल्यमानोऽपि मुमूर्षति
ते चेन्न पश्यति तर्हि पतेद्दैवेनेत्याह देहोऽपीति दैववशानुगच्छन् स्वारंभकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिस।
मीक्षत एव जीवत्येव सासुः प्राणेन्द्रियसहितः ननु तर्हि तस्मिन् कदाचित्सङ्गोऽपि स्यान्नेत्याह तमिति स्वाप्नं
स्वप्नतुल्यं अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन अत एव प्रतिबुद्धं ज्ञातं परमार्थवस्तु येन सः तथा
च श्रुतिः तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ३७ ॥ रामः रामः ॥

उक्तार्थं तेषां विश्वासार्थं स्वस्वरूपमाह मयेति सांख्यमात्मानात्मविवेकः योगो ष्टांगः तपो गुह्यं रहस्यं
यज्ञो विष्णुर्यज्ञो वै विष्णुरिति श्रुतेः युष्मद्धर्मविवक्षया एतेन धर्मो प्युपदिष्ट इति ज्ञेयं अतएव यतेन
हंसरूपेण ब्रह्मणो न्यास्यमाधवे त्वनुवादो भविष्यति ३८ अतं प्रमीयमाणो धर्मः सत्यं अनुष्ठीयमानो
धर्मः तेजः प्रभावः एतेषां परमयनं ३९ किं च मामिति कृपं भूताः अगुणाः गुणपरिणामरूपा न भवंति।
किंतु निस्ताः इत्यर्थः ४० मेमया अगणात मानुष्टुवुः ४१ प्रत्यायाप्रस्यागतोस्मि ४२ एकादशे त्रयो

मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः जानीत मागतं यज्ञं युष्मद्धर्मविवक्षया ३८
अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य
च ३९ मां भजंति गुणाः सर्वे निर्गुणं निरपेक्षकं सुहृदं प्रियमात्मानं साम्यासंगादयो गु
णाः ४० श्रीभगवानुवाच इति मे छिन्नसंदेहा मुनयः सनकादयः सभाजयित्वा पर
या भक्त्यागृणत संस्तवैः ४१ तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः प्रत्येयाय स्व
कं धाम पश्यतः परमेष्ठिनः ४२ इति श्रीभागवते म० ए० त्रयोदशोध्यायः १३ उद्धव उ०
वदंति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः तेषां विकल्पप्राधान्यमुताहो एकमुख्यता १

दशोध्याय १३ चतुर्दशे परं श्रेयो भक्तिरेव न चेतरत् इत्येतद्दर्शितं ध्यानयोगश्च सहसाधनैः
१ एवं तावद्भगवता भक्त्या मोक्ष इत्युक्तं अन्ये त्वन्यानि वदंति तत्र विशेषनिर्धारणाय पृच्छति
वदंतीति श्रेयांसि श्रेयःसाधनानि किं विकल्पेन प्राधान्यमुताहो किं वा एकस्यैव मुख्यता १

एकमुख्यता वा तत्राप्यनेककारणं भवतैवेति अनपेक्षितः न अपेक्षितं अपेक्षा यस्मिन्सः अहैतुकः अपवर्गः भवता
यो भक्तियोग उक्तः अन्यानि च यानि श्रेयःसाधनानि वदन्ति तेषां किं साक्षात्फलसाधनत्वेन प्राधान्यमेव सर्वेषामुत
अङ्गाङ्गित्वं प्राधान्ये यथा विकल्पेन सर्वेषां तुल्यफलत्वं यद्वा कस्मिंश्चिद्विशेष इति २ तत्र भक्तिरेव महा
फलत्वेन मुख्या अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुंसां स्वानीयस्वर्गादिफलबुद्धिभिः प्राणिभिः प्राधान्येन परि
कल्पितानि तुच्छकफलानीति विवक्तुं प्रकृतिभेदसारेण बहुधा वेदार्थप्रतिपत्तिमाह कालेनेति सप्तभिः मदात्म

भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः निरस्य सर्वतः संगं येन त्वय्याविशेन्मनः २
श्रीभगवानुवाच कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता मयादौ ब्रह्मणे प्रोक्ता धर्मो
यस्यां मदात्मकः ३ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ततो भृग्वादयोऽगृह्णन्सप्त
ब्रह्ममहर्षयः ४ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः मनुष्याः सिद्धगन्धर्वाः सविद्याध
रचारणाः ५ किंदेवाः किंनरा नागा रक्षः किंपुरुषादयः बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमो
भुवः ६ याभिर्भूतानि भिद्यन्ते भूतानां पतयस्तथा यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ७

कः मय्येवात्मा चित्तं येन सः ३ भृग्वादयः भृगुश्च मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुरित्येते च सप्त
ब्रह्मणः प्रजापतयः ते च ते महर्षयश्च ४ । ५ किंदेवाः कमस्वेददौर्गन्ध्यादिराहित्येन किं देवाः मनुष्या
वेति संदेहास्पदभूताः द्वीपान्तरमनुष्याः एवं किंनराः किंचिन्नरा इव मुखतः शरीरतो वा किंपुरुषाः ।
किंचित्पुरुषा इव वानरादयः प्रकृतयः वासनाः बह्व्यः कुतः रजःसत्त्वतमोभ्यो भुवः जन्मस्थानानि यासां
तानि ६ भूतानि देवासुरमनुष्यादीनि चित्रा वाचः वेदार्थव्याख्यानविषयाः ७ ॥ ॥

एवमित्युक्तोपसंहारः केषांचिद् ध्ययनादिकृत्यानामुपदेशपारंपर्येण अपरे पाषंडमतयः वेदवि
रुद्धार्थमतयः ८ तत्र प्रकृतीनां मायागुणमयत्वात् मन्मायामोहितधियः अनेकांतं नानाविधं ९।
तदेवाह धर्ममितिसार्द्धेन धर्मं कर्ममीमांसकाः तदुक्तं मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः नित्य
नैमित्तिके कुर्यात्प्रत्यवायजिहासयेत्यादि यशः काव्यालंकारकृतः यथाहुः यावत्कीर्तिर्मनुष्यस्य पु
ण्या लोकेषु गीयते तावद्वर्षसहस्राणि स्वर्गलोके महीयते इति कामं वात्स्यायनादयः सत्यं समं दमं

एवं प्रकृतिवैचित्र्याद्भिद्यंते मतयो नृणां पारंपर्येण केषांचित्पाषंडमतयोपरे ८ मन्मा
यामोहितधियः पुरुषाः पुरुषर्षभ श्रेयो वदंत्यनेकांतं यथाकर्म यथारुचि ९ धर्ममेके य
शश्चान्ये कामं सत्यं दमं शमं अन्ये वदंति स्वार्थं वा ऐश्वर्यं त्यागभोजनं केचिद्यज्ञं तपो
दानं व्रतानि नियमान्यमान् १० आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः दुःखोदर्का
स्तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ११ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः मयात्मना
सुखं यत्तत्कुतः स्याद्विषयात्मनां १२ ॥

चयोगशास्त्रकृतः अन्ये दृष्टार्थवादिनो दंडनीति
कृतः वैशेषिकादयस्त्वर्थमेव स्वार्थं पुरुषार्थं वदंति अतः सामाद्युपाया एव श्रेयःसाधनमिति तेषां म।
तत्वे त्यागभोजने च लोकायतिकाः यज्ञं तपो दानं यमादेर्व्रतानां एजनं तपस्त्र दानं च १० ते
षां तुच्छफलत्वमाह आद्यंतवंत इति एषां लोकाः एते साध्यानि फलानि तमोनिष्ठा मोहावसानाः
भोगकालेप्यसूयादिभिः शुचार्पिताः व्याप्ताः ११ भक्तेर्मुख्यत्वमाह मय्यर्पितेति यावत्समाप्ति हे सभ्य म
यापरमानंदरूपेण आत्मना स्वरूपत्वेन स्फुरता १२ ॥ राम रामः

किंच अन्येषां न तल्लोकादिपरिच्छिन्नं सुखं भक्तस्य तु परिपूर्णमित्याह अकिंचनस्येति १३ परिपूर्णता=
मेवाह न पारमेष्ठ्यमिति रसाधिपत्यं पातालादिस्वाम्यं अपुनर्भवं मोक्षमपि मद्विना मां हित्वा अन्यन्नेच्छ
ति अहमेव तस्य प्रेष्ठ इत्यर्थः १४ ममापि स एव प्रेष्ठ इत्याह न तथेति द्वाभ्यां आत्मयोनिः ब्रह्मा पुत्रोपि शंक
रः मत्स्वरूपमतोपि संकर्षणः भ्रातापि श्रीर्भार्यापि आत्मा मम विग्रहोपि यथा भक्त इति ब्रुवन्नुद्धवेतिहर्षेणाह भ=
वानिति १५ पूयेयमद्दंतर्वर्तिब्रह्माण्डानि पवित्रीकुर्यामिति भावेनेत्यर्थः १६ किंच मद्भक्तानां सुखं ननाव

अकिंचनस्य शांतस्य दांतस्य समचेतसः मया [illegible] संतुष्टमनसः
सर्वाः सुखमया दिशः १३ न पारमेष्ठ्यं न महेंद्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यं न योगसिद्धी
रपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् १४ न तथा मे प्रियतम आत्मयोनिर्न शंकरः न
न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् १५ निरपेक्षं मुनिं शांतं निर्वैरं समदर्शनं अनु
व्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः १६ निष्किंचना मय्यनुरक्तचेतसः शांता महांतोखिल
जीववत्सलाः कामैरनालब्धधियो जुषंति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम १७ बाध्यमानोपि
मद्भक्तो विषयैरजितेंद्रियः प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते १८ ॥ हेवंभूतमिति वाक्याव

कुं समर्थः यतस्तत्स्वसंवेद्यं निरूपमित्याह निःकिंचना इति महांतः निरहंमानाः अनालब्धधियः अस्पृ
ष्टचित्ताः निःकिंचनत्वादीनां यत्पैरपेक्ष्यं तत्र हेतुर्मद्भावः एवंभूता मम मदीयाः यत्सुखं जुषंति सेवंते तत्सुखं ते ए
व विदुः नान्ये कुतः नैरपेक्ष्यं नास्ति अपेक्षणीयं येषां ते निरपेक्षाः तेषां भावं नैरपेक्ष्यं तेन तु मा आत्मा यत्तेन रूपेणेत्यर्थः यो
द्वा एवंभूताः संतोषेण मामित्यर्थः जुषंति प्रीणंति त एव यन्नैरपेक्ष्यं सुखं तद्विदुर्नान्ये इत्यन्वयः १७ अपि
च आस्तां तावदुत्तमभक्तः कथायतः प्राकृतोपि भक्तः कृतार्थ एवेत्याह बाध्यमान इति द्वाभ्यां विषयैरा

पाकाद्यर्थं प्रज्वालितोऽग्निः यथा काष्ठानि भस्मीकरोति न रागादिनापि कथंचिन्मद्विषया सती भक्तिः समस्तपापानीति भगवानपि स्वभक्तिमहिमाश्चर्येण संबोधयति अहो उद्धवेति विस्मयं सूचयति १९ अत एवं भूतं श्रेयो नान्यस्तथेत्याह न साधयतीति द्वाभ्यां २० श्रद्धयाप्या भक्तिस्तया सम्भवात् जातिदोषादपीत्यर्थः २१ भक्ताभावे न तत्साधनं अपि स्वरूपमित्याह द्वाभ्यां धर्म इति २२ रोमहर्षादिकं भक्तिगम्यते भक्त्या च विना क

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः १९ न साधयति मां योगो न सांख्यं धर्म उद्धव न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता २० भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतां भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् २१ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि २२ कथं विना रोमहर्षं द्रवता चेतसा विना विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः २३ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति २४ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपं आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो मां २५॥

थमाशयः शुद्ध्येदिति २३ किंच भक्तिः स्वाश्रयं शोधयतीति किं वक्तव्यं यतो गद्गदवागादिलक्षणो मद्भक्तियुक्तो लोकं सर्वं पुनातीत्याह वागिति २४ अपि च भक्त्यैवात्मशुद्धिर्नान्यत इति सदृष्टान्तमाह यथेति यथाग्निना ध्मातं तापितमेव हेम सुवर्णं अन्तर्मलं जहाति न क्षालनादिभिः स्वं निजं रूपं च भजते कर्मानुशयं कर्मवासनां मां भजते मद्रूपतामापद्यते २५॥ रामः रामः रामः।

ननु ब्रह्मविदाप्नोति परं तमेव विदित्वातिमृत्युमेतीत्यादिश्रुतिभ्यो ज्ञानादेवाविद्यानिवृत्त्यात्मप्राप्तिरव
गम्यते कुतो भक्तियोगेनेत्युच्यते तत्राह यथा यथेति आत्मा चित्तं परिमृज्यते शोध्यते मत्पुण्यकथानां श्रवणै
रभिधानैश्च भक्तैरेवावान्तरव्यापारो ज्ञानेन पृथगित्यर्थः २६ किंच ज्ञानं नाम चित्तस्य मदाकारपरिणा
मः स च मां भजतः स्वभावत एव भवति न च यत्नान्तरमपेक्षत इति सदृष्टान्तमाह विषयानिति २७ यस्मादन्या
साधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्धित्वा मय्येव मनः समाहितं कुर्विति प्रकर

यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः तथा तथा पश्यति तत्वसूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तं २६ विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते मामनुस्मरतश्चित्तं
मय्येव प्रविलीयते २७ तस्मादसदभिध्यानं यथा स्वप्नमनोरथं हित्वा मयि समाधत्स्व म
नो मद्भावभावितं २८ स्त्रीणां स्त्रीसंगिनां संगं त्यक्त्वा दूरत आत्मवान् क्षेमे विविक्त आसी
नः चिन्तयेन्मामतन्द्रितः २९ न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसंगतः योषित्संगाद्यथा पुं
सो यथा तत्संगिसंगतः ३० उद्धव उवाच यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकं ध्यायेन्मुमु
क्षुरेतन्मे ध्यानमेव वक्तुमर्हसि ३१ ॥

णमुपसंहरति तस्मादिति मद्भावभावितं मद्भावेन मद्भजनेनैव
शोधितं २८ विशेषतो वा त्याज्यानाहोक्त काममार्गाः परित्याज्या इत्याह स्त्रीणामिति आत्मवान् धीरः सन्
क्षेमे निर्भये देशे विविक्ते विजने २९ एतदुपपादयति न तथेति अस्य पुंसः यथा तत्संगिसङ्गतः क्लेशो
भवेत् यथा च बन्धो योषित्संगतः तथान्यप्रसंगतो न भवेदिति ३० मां चिन्तयेदित्युक्तं तत्प्रकारं पृच्छति य
थेति ध्यानाङ्गप्रश्नः यादृशमिति ध्येयविशेषणप्रश्नः यदात्मकमिति यस्य तानि विशेषणानि तत्स्वरूपप्र
श्नः एतन्मे ध्यानमेव वक्तुमर्हसीति पाठः तत्रायमर्थः मुमुक्षुस्त्वां यथा ध्यायेत्तन्मे वक्तुमर्हसीति जिज्ञासोः कथ

तत्र ध्यानाङ्गत्वेनासनप्राणायामप्रकारमाह सम इति चतुर्भिः समे नात्युच्छ्रिते नातिनीचे आसने कं बलादौ समकायः सन् यथासुखमासीनः स्वस्तिकादि नियमः उक्तः नासाग्रनिरीक्षणं च चित्तस्थैर्याय अन्तर्लक्ष्यो बहिर्दृष्टिः स्थिरचित्तः सुसंयत इति योगशास्त्रोक्तेः ३२ विपर्ययेण रेचकपूरककुम्भकक्रमेण अपि यद्वा वामनाड्या पूरितं दक्षिणया त्यजेत् तथा वामया त्यजेत् विपर्ययेणेत्ययमर्थो योगे प्रसिद्धः ... पूर यद्वायुस्तजेत् पिङ्गलया ततः जितनिर्जितेन्द्रिय इति प्रत्याहार उक्तः ३३ प्राणायामोद्विविधः सगर्भोऽगर्भश्च

श्रीभगवानुवाच सम आसन आसीनः समकायो यथासुखं हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ३२ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ३३ हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत् प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरं ३४ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् दशकृत्वस्त्रिषवणं मासादर्वाक् जितानिलः ३५ हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखं ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकं कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरं ३६ तत्र अगर्भः स्वास्यात्

गर्भमाह हृदीति द्वाभ्यां मूलाधारादारभ्य अविच्छिन्नं सततं घण्टानादतुल्यमोङ्कारं हृदि संतं प्राणेनोदीर्य ऊर्ध्वं द्वादशाङ्गुलपर्यन्तं नीत्वा कथं बिसोर्णावत् कमलनालतन्तुवत् तत्र मात्रातीते स्वरं पञ्चदशं बिन्दुं संवेशयेत् अथ पुनरित्यनेन च बिन्दुशिरस्कं कुर्यादित्यर्थः यद्वा मूलाधारादारभ्य संततं प्रवृत्तं बिसतन्तुवत् सूक्ष्ममविच्छिन्नं संतं हृदि मनाक् प्राणेनोदीर्य अभिव्यज्य अथ पुनस्तत्र ओङ्कारं घण्टानादतुल्यस्वरं उदात्तनादं स्थिरीकुर्यादिति ३४ मासादर्वाक् जितानिलो भवति ३५ एवं ध्यानाङ्गमुक्त्वा ध्येयं दर्शयिष्यन् सोत्तरं वक्तुं ध्यानयोग्यं पीठमाह हृत्पुण्डरीकमिति सार्धेन अन्तःस्थं देहान्तर्वर्ति ऊर्ध्वनालमधोमुखं मुकुलि

सविशेषणं ध्यानमाह वह्निमध्य इति षड्भिः ध्यानमंगलं ध्यानस्य शुभं विषयं समं अनुरूपावयवं दीर्घा
श्चारवश्च चत्वारो भुजा यस्मिंस्तत् ३७ सुचारु अतिरम्यं समानयोः कर्णयोर्विन्यस्ते स्फुरती मकराकारे
कुंडले यस्मिंस्तत् ३८ श्रीवत्सश्रियोर्निकेतनं वक्षसि दक्षिणवामतस्ताभ्यां युक्तमित्यर्थः ३९ द्युमद्भिः
किरीटादिभिः समंतात् युक्तं अलंकृतं ४० प्रसादेन शोभने सुमुखे ईक्षणे च यस्मिंस्तत् सुकुमारं अ

वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमंगलं समं प्रशांतं सुमुखं दीर्घचारुचतुर्भुजं ३७ सु
चारुसुंदरग्रीवं सुकपोलं शुचिस्मितं समानकर्णविन्यस्तस्फुरन्मकरकुंडलं ३८ हेमां
बरं घनश्यामं श्रीवत्सश्रीनिकेतनं शंखचक्रगदापद्मवनमालाविभूषितं ३९ नूपुरैर्वि
लसत्पादं कौस्तुभप्रभया युतं द्युमत्किरीटकटककटिसूत्रांगदायुतं ४० सर्वांगसुंदरं हृ
द्यं प्रसादसुमुखेक्षणं सुकुमारमभिध्यायेत्सर्वांगेषु मनो दधत् ४१ इंद्रियाणींद्रियार्थेभ्यो
मनसाकृष्य तन्मनः बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ४२ तत्सर्वव्यापकं चित्तमा
कृष्यैकत्र धारयेत् नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखं ४३ तत्र लब्धपदं चित्तमाकृष्य
व्योम्नि धारयेत् तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत् ४४ तिकोमलं ४१ सविशेषणं ध्यान।

मुपसंहरति इंद्रियाणीति प्रकर्षेण आनयेत् सर्वतः सर्वांगयुक्ते ४२ यादृशमित्यस्यांतरत्वेन सविशेषणमुक्तं
यदात्मकमितरस्यांतरं तथा शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यंतमाह तदिति त्रिभिः एकत्रांगे
अन्यान्यंगानि न चिंतयेत् एकत्रेति यदुक्तं तदेवांगं दर्शयति सुस्मितमिति ४३ व्योम्नि सर्वकारणे धार
येत् तच्च कारणत्वमपि त्यक्त्वा मदारोहः मयि शुद्धे ब्रह्मणि आरूढः सन् किंचिद्ध्यानध्येयविभागमपि

व
४२

मामेवात्मनि विचक्षे आत्मानं च सर्वात्मनि मयि संयुतं विचक्षे ज्योतिर्ज्योतिषि संयुतमित्येवान्वयः ४५ ए
वंभूतसमाधिपर्यन्तध्यानस्य फलमाह ध्यानेनेति मनो युंजतः समारधतः द्रव्यज्ञानक्रियाभ्रमः अधिभू
ताधिदैवाध्यात्मरूपः द्रष्टृदृश्यदर्शनरूपो भ्रमः निर्वाणं शान्तिं सम्यग्याप्स्यतीति ४६ ॥ एकादशे चतुर्दशः
१४ ततः पंचदशे प्रोक्ताः सिद्धयो धारणानुगाः श्रीविष्णुपरतः प्रायः बाधनरायनयामताः १ एवं मनो युंज ।

एवं समाहितमतिर्मामेवात्मानमात्मनि विचष्टे मयि सर्वात्मन् ज्योतिर्ज्यो
तिषि संयुतः ४५ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः संयास्यत्याशु
निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ४६ इति श्रीभागवते महापुराणे एकादश
स्कंधे भगवदुद्धवसंवादे चतुर्दशोऽध्यायः १४ श्रीभगवानुवाच जितेन्द्रियस्य युक्तस्य जि
तश्वासस्य योगिनः मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः १ उद्धव उवाच कया धारण
या कास्वित्कथंस्वित्सिद्धिरच्युत कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् २ श्री
भगवानुवाच सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः तासामष्टौ मत्प्रधाना दशैव
गुणहेतवः ३ ॥ जितेति योगिनोंतराविर्भवन्त्यः सिद्धयोऽन्तरायप्राया एव अतस्ताः परिहृत्य परमे
श्वरपर एव भवेदिति वक्तुं सिद्धीराह जितेन्द्रियस्येति युक्तस्याप्यस्थिरचित्तस्य १ किंस्विदिति वितर्के कास्वित्
किंनाम्नी कथंस्वित्कीदृशी वा धारणा कं फलतीति प्रश्नान्तरे वा शब्दः त्वमेतज्जानासि नान्यः स्यात् श्रेय
नाहं योगिनामिति २ धारणा अष्टादश स्मृतास्तत्र योगपारगैरिति त्रिकालज्ञत्वादिहेतुस्सिद्धीर
पि जानंतीति भावः अहमेव प्रधानं मुख्यः स्वभावतः आश्रयः यासां ।

नाः स्वरूपेणोपदिशति अणिमेति सार्द्धैः पंचभिः अणिमा लघिमा महिमा च मूर्त्तेर्देहस्य तिस्रः प्राप्तिर्ना
मसिद्धिः सर्वप्राणिनामिंद्रियैः सह तत्तदधिष्ठातृदेवतारूपेण संबंध इत्यर्थः श्रुतेषु पारलौकिकेषु दृष्टेषु
दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहितेष्वपि प्राकाम्यं भोग्यदर्शनसामर्थ्यं सिद्धिः शक्तीनां मायातद्दशाम
नानाप्रेरणं तत्रेश्वरे मायायाः अन्येषु तदंशानां प्रेरणं ईशिता नाम सिद्धिः ४ विषयभोगेष्वसंगो वशि
ता नाम सिद्धिः यत्कामः यद्यत्सुखं कामयते तत्तद्वस्त्वतिशयेन तस्य सीमानं प्राप्नोतीत्यष्टमी सिद्धिः औत्पत्ति

अणिमा महिमा मूर्त्तेर्लघिमा प्राप्तिरिंद्रियैः प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ४ गुणेष्वसंगो वशिता यत्कामस्तदवस्यति एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ५ अनूर्मिमत्त्वं देहेस्मिन्दूरश्रवणदर्शनं मनोजवः कामरूपं परकायप्रवेशनं ६ स्वच्छंदमृत्युर्देवानां सहक्रीडानुदर्शनं यथासंकल्पसंसिद्धिराज्ञाप्रतिहता गतिः ७ त्रिकालज्ञत्वमद्वंद्वं परचित्ताद्यभिज्ञता अग्न्यर्कांबुविषादीनां प्रतिष्टंभोऽपराजयः ८ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः यया धारणया या स्याद्यथा वा स्यान्निबोध मे ९॥

कः स्वाभाविको निरतिशय इत्यर्थः ५ गुणहेतुः सिद्धीराह अनूर्मिमत्त्वं क्षुत्पिपासा
दिराहित्यं दूरे श्रवणो दर्शने चेति द्वे सिद्धी मनोवेगेन देहस्य गतिः कामरूपप्राप्तिः परकायप्रवेशः ६ स्वेच्छा
मृत्युः अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनप्राप्तिः संकल्पानुरूपप्राप्तिः अप्रतिहता
आज्ञा गतिर्यस्याः सा आज्ञा चेत्येता दश ७ क्षुद्रसिद्धीः अद्वंद्वं चाह त्रिकालज्ञत्वमिति
अद्वंद्वं शीतोष्णाद्यनभिभवः अग्न्यादीनां संस्तंभनं ८ तत्तद्धारणा[illegible]भिः सह विशेषे

भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारं उपास्ते यः स तन्मात्रोपासकः मम मदीयम् अणिमानं १० ज्ञानश
क्ति महत्तत्त्वोपाधौ मयि यथासंस्थं महत्तत्त्वाकारं भूतानां चेति आकाशादिभूतोपाधौ च मयि मनो धार
यन् तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ११ वाय्वादिभूतानां ये परमाणवः तन्मये तदुपाधौ चित्तं मयि रंज
यन् योगी कालसूक्ष्मार्थतां कालपरमाणूपाधिरूपताम् इति लघुत्वविवरणं तदुक्तं स कालः परमाणुर्वै यो
भुंक्ते परमाणुताम् इति १२ वैकारिकाहंकारोपाधौ मयि अखिले एकाग्रे आत्मत्वं अधिष्ठातृत्वं अत्र हेतुः

भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन्मनः । अणिमानमवाप्नोति तन्मात्रोपासको
मम १० महत्यात्मनि मयि परे यथासंस्थं मनो दधत् । महिमानमवाप्नोति भूतानां च पृथ
क्पृथक् ११ परमाणुमये चित्तं भूतानां मयि रंजयन् । कालसूक्ष्मार्थतां योगी लघि
मानमवाप्नुयात् १२ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिले । सर्वेंद्रियाणामात्मत्वं
प्राप्तिं प्राप्नोति मन्मनाः १३ महत्यात्मनि यः सूत्रे धारयेन्मयि मानसं । प्राकाम्यं पारमे
ष्ठ्यं मे विंदतेऽव्यक्तजन्मनः १४ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे । स ईशि
त्वमवाप्नोति क्षेत्रज्ञक्षेत्रचोदनां १५॥ मन्मनाः मयि मनोधारणप्रभावादेवं भवति नातीव हेतुरनुसं
धेय इति भावः एवं मद्धारणानुभावेन मद्योगबलमाश्रयस्वेति सूचितं १३ क्रियाशक्तिप्रधानं महत्त
त्त्वमेव सूत्रं तदुपाधौ मयि पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाम्यं विंदते कथंभूतस्य मे अव्यक्ताज्जन्म यस्य
तस्य सूत्रं तदुपाधेर्ममेत्यर्थः १४ त्र्यधीश्वरे त्रिगुणमायानियंतरि अत एव कालविग्रहे आकल
यितृरूपे अंतर्यामिणि ईशित्वं विशिनष्टि क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनां प्रेरणेन
तु विश्वस्य क्षपादिकर्तृत्वलक्षणमित्यर्थः १५॥ ॥ ॥ ॥

तुरीयाख्ये विराड्हिरण्यगर्भकारणं चेत्युपाधयः ईशः(?) स्युपत्रिभिर्हीनं तुरीयं तत्स्वरूपं विदुरित्येवं लक्षणे ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा इति भगवच्छब्दशब्दिते ऐश्वर्यसंपन्ने १६ यत्र परमानन्दरूपे सर्वोऽपि कामस्तदंशभूतो ऽवसीयते समाप्यते ते १७ अतः परं गुणहेतुकाः सिद्धीराह शुद्धे सत्त्वात्मके श्वेततां शुद्धतां १८ आकाशात्मनि प्राणे समष्टिरूपे तत्रैव मयि मनसा घोषं नादं चिंतयन् असौ हंसो जीवः तत्र आकाशे उपलब्धा ज्ञाता आसन् तत्रस्थाः विचित्रा वाचः श्र

नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते मनो मय्यादधद्योगी मद्धर्मा वशितामियात्
१६ निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः परमानन्दमाप्नोति यत्र कामोऽवसीयते
१७ श्वेतद्वीपपतौ चित्तं शुद्धे ––मये मयि धारयञ्छ्वेततां याति षडूर्मिरहितो नरः १८ म। तो २
य्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्य
सौ १९ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि मां तत्र मनसा ध्यायन् विश्वं पश्यति
सूक्ष्मदृक् २० मनो मयि सुसंयोज्य देहं तदनुवायुना मद्धारणानुभावेन तत्रात्मा यत्र वै म

णोति यद्वा तत्र आकाशे उपलब्धा अभिव्यक्ताः भूतानां वाचः दूरतः शृणोति १९ दूरश्रवणमुक्त्वा दूरदर्शनमाह त्वष्टा आदित्यः तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तत्रापि संयोगे मां ध्यायन् विश्वं [illegible]तः पश्यति २० मनः देहं च तदनुवर्त्तिना वायुना सह मयि सुसंयोज्य मद्धारणा क्रियते तस्याः प्रभावेन। यत्र मनो याति तत्रात्मा देहो यातीत्यर्थः यद्वा मनः कर्तृ आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति २१॥

मनः उपादाय उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनोरूपं मनसोभीष्टं रूपं योगी भवेत् कुतः यतो मद्योगबलं योहमचिन्त्यशक्तिर्नानाकारः तस्मिन्मयि मनसो यो योगो धारणा तस्य बलं प्रभावः स एवाश्रयः कारणं २२ यत्र प्रवि विवक्षितं तत्रात्मानं चिन्तयेत् ततः पिंडं स्वदेहं हित्वा प्राणः प्राणप्रधानलिंगशरीरोपाधिः वायुभूतः वात्यवायोर्भूतः प्रविष्टः तेन मार्गेणेत्यर्थः षडंघ्रिवत् भृंगो यथा पुष्पात्पुष्पान्तरमनायासेन प्रविशति तद्वत् २३ पिंडं हित्वेत्युक्तं तत्प्रकारं कथयन्स्वच्छंदमृत्यु

यद्वा मन उपादाय यद्यद्रूपं बुभूषति तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः २२
परकायं विशन्सिद्ध आत्मानं तत्र भावयेत् पिंडं हित्वा विशेत्प्राणो वायुभूतः षडंघ्रिवत् २३ पार्ष्ण्यापीड्य गुदं प्राणं हृदुरःकंठमूर्द्धसु आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुं २४ विहरिष्यन्सुराक्रीडे मत्स्थं सत्वं विभावयेत् विमानेनोपतिष्ठन्ति सत्ववृत्तीः सुरस्त्रियः २५ यथा संकल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् मयि सत्ये मनो युंजंस्तथा तत्समुपाश्नुते २६॥

माह पार्ष्ण्या पार्ष्णिना गुदं निरुध्य प्राणं प्राणोपाधिमात्मानं ब्रह्मरन्ध्रेण मूर्द्धारेण ब्रह्म श्रेत्युपलक्षणं ब्रह्म वा स्वयं अपेक्षितं स्थानं मनसा नीत्वा २४ मत्स्थं मन्मूर्तिरूपं शुद्धं सत्वं चिंतयेत् तदा सत्ववृत्तयः सत्वांशभूताः २५ यदा वा अकालेपि यथा वेत्यपार्थे यथा वा येन केनापि प्रकारेण बुद्ध्या संकल्पयेत् तत्तथा यथावत्प्राप्नोतीत्यर्थः यद्वा यथा संकल्पयेत् यः पुमान् मत्परः मयि विश्वासवान् भवति तथा तद्वत् तद्रूपं सर्वं प्राप्नोतीत्यर्थः किं कुर्वन् सत्ये सत्यसंकल्पे मयि मनो युंजन् २६॥

मद्विलिपप्यक पदं ममेत्यर्थः ईशितुः सर्वनियंतुः वशितुः स्वतंत्रस्य मम भावं स्वभावं प्राप्तः एता गुणहेतवः २७
अतः परं शुद्धः धारणाविद इति त्रिकालज्ञेश्वरधारणास्य चित्ता त्रैकालिकी त्रिकालवस्तुविषया स्वजन्म
मृत्युभ्यामुपबृंहिता तत्सहिता अनयैव परचित्ताद्यभिज्ञतापि व्याख्याता २८ अग्न्यादिसर्वोपघातशून्यो
भगवानित्येवं भूतयोगमयं तेनाभिभूयेत तत्र हेतुः मद्योगेति यादसामुदकं यथा अभिघातकं न भवति तथा

यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् न कुतश्चिद्विहन्येत तस्य चाज्ञा यथा मम २७ ।
मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता २८
अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः मद्योगशांतचित्तस्य यादसामुदकं यथा २९
मद्विभूतीरभिध्याय श्रीवत्सास्त्रविभूषिताः ध्वजातपत्रव्यजनैः स भवेदपराजितः ३०
उपासकस्य मामेवं योगधारणया मुनेः सिद्धयः पूर्वकथिता उपतिष्ठंत्यशेषतः ३१ जितें
द्रियस्य शांतस्य जितश्वासात्मनो मुनेः मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ३२ अं
तरायान् वदंत्येता युंजतो योगमुत्तमं मया संपद्यमानस्य कालक्षपणहेतवः ३३ ॥

तस्य वपुः अग्न्यादयः इत्यर्थः अनयैवाहृतापि व्याख्याता २९ मद्विभूतीः ममावतारान् ध्वजादिभिः सह ३०
उपसंहरति उपासकस्येति एवं पूर्वधारणाभिः ३१ यद्वा किं त्वानाधारणाभ्यासेन एकयैव सर्वाः सिद्ध
यो भवंतीत्याह जितेंद्रियस्येति मद्धारणां नारायणो तुरीयाख्यं इत्यत्रोक्तां या सुदुर्लभा स्यात् सा का न कापि
इत्यर्थः ३२ यद्यप्येवं तथापि न प्राप्तव्या इत्याह अंतरायानिति ३३ ॥

तस्मादहैतुकीमेवधारणांकार्यानान्या:कार्यात्याह जन्मेतिजन्मनैवकाश्चित्सिद्धयोभवंतियथादे
वानांयथाचयादसामुद्रकेतिभःपक्ष्यादीनांखेचरत्वादिनदुक्तंपातंजलेजन्मौषधितपोमंत्रयोगजाःसि
द्धयइतियोगेनमद्धारणामित्युक्तेनयोगगतिंमत्सालोक्यादिरूपं ३४ तत्कुतइत्यतआह सर्वासामिति
ईनप्रभुत्वोपपादनं तेहेतुःकारणंपतिःपालयिताचेतिकिंचनकेवलंसिद्धानामेवप्रभुःअपितुमोक्षा
दीनामपीत्याह अहमितियोगोमोक्षःसांख्यंतत्साधनंज्ञानंधर्मस्यतदुपदेष्टॄणांब्रह्मवादिनांच ३५

जन्मौषधितपोमंत्रैर्यावतीरिहसिद्धयः योगेनाप्नोतिताःसर्वानान्यैर्योगगतिंव्रजेत्
३४ सर्वासामपिसिद्धीनांहेतुःपतिरहंप्रभुः अहंयोगस्यसांख्यस्यधर्मस्यब्रह्मवादि
नां ३५ अहमात्मांतरोबाह्योनावृतःसर्वदेहिनां यथाभूतानिभूतेषुबहिरं
तःस्वयंतथा ३६ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेपंच
दशोध्यायः १५ ॥

कुतस्तत्राह अहमितिसर्वदेहिनांजीवानामात्मायतःअंतरःअंतर्यामीएवंतत्रआत्मांतर्याम्यप्यभूतइति
भ्रांतेःतर्हिकिमंतर्वर्तित्वात्परिछिन्नःनवाह्यश्चव्यापकइत्यर्थःतत्रहेतुःअनावृतःएतत्सदृष्टांतमाहभू
तेषुचतुर्विधेषुमहाभूतानियथाबहिरंतश्चभवंतिस्वयंअहमपितथेत्यर्थः ३६ इत्येकादशेपंचदशः
१५ षोडशेतुहरेराविर्भावयुक्ताविभूतयःस्तानवि र्यप्रभावादिविशेषेणोपवर्णिताः १ अनन्यक्तित्वेनयुद्धान
मशोकामकृतात्मनां अतस्तद्योग्यतापत्यैविभूत्यादिनिरूपणं २॥ रामः रामः॥

एवंकारणत्वेन सर्वात्मकत्वमनुस्मरन्तीः ५६ नियेष्विति उपासीनाः सेवमानाः। प्र
सेतः ३ दुर्ज्ञेयत्वमेवाह गूढः अस्फुटः भूतानां प्राणिनां मध्ये अत्र हेतुः भूतानामात्मा अतएवामीतत्रापिहे
भूतभावनेति ते त्वया ४ नास्त्येवसाकल्येन पृच्छामि हे महाविभूते याः काश्चिद्दिव्याः दिवि भुवि विभूतयः रसाया।
रसातले अनुभाविताः त्वयैव केनचिच्छक्तिविशेषेण संयोजिताः तीर्थानां ये ऽद्य च तद्ब्रूहि पृच्छामि च ५ नराव
नारभूतार्जुनप्रश्नसंवादित्वात् वायप्रश्नः साधीयानिति तावरत्नमारत एवमिति त्रिभिः प्रश्नप्रव्यक्ष्यपत्ने।

येषु येषु च भावेषु भक्त्या त्वां परमर्षयः। उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ३ गूढश्चा-
रसि भूतात्मा भूतानां भूतभावन। न त्वां पश्यन्ति भूतानि पश्यन्ते मोहितानि ते ४ याः का-
श्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते। तां मह्यमाचक्ष्व त्वनुभाविताः त्वं नमामि
ते तीर्थपदाङ्घ्रिपद्म ५ श्रीभगवानुवाच एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर। युयुत्सुना
विनशने सपत्नैरर्जुनेन वै ६ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकं। ततो निवृत्तो हन्ताहं
हतोऽयमिति लौकिकः ७ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः। अभ्यभाषत मामेवं यथा त्वं
रणमूर्द्धनि ८ ॥ अहमात्मा ह्यमीषां भूतानां सुहृदीश्वरः। अहं सर्वाणि भूतानि तेषामपि

योद्धुमिच्छता विनशने कुरुक्षेत्रे ६ पृष्टोऽर्थं विभूतिप्रश्नेकः प्रसंगः तत्राह ज्ञात्वेति लौकिकः प्राकृतमतिः सन्
ततो ज्ञातिवधान्निवृत्तः ७ स च यदा ततो ज्ञातिवधान्निवृत्तः तदा मया प्रतिबोधितः सन् यथा त्वमिमां प्रश्नमेवं
मामपृच्छत् मामभ्यभाषत तद्वत्त्वापि कथयिष्यामीति भावः ८ ता विभूतीः कथयति अहमिति अस्मच्छब्द।
समानाधिकरणाः प्रथमान्ता द्वितीयान्ताश्च सर्वा विभूतयः तासामुपासनार्थं कथ्यते षष्ठ्यन्ताश्च क्वचिन्निर्द्धारणे
संबंधे च क्वचिद्यथायोगं पदेभ्यो व्याख्यातव्याः अमीषां भूतानामात्मेति सुहृदिति ईश्वर इति च सामान्येनाह उपा

विशेषतो विभूतीराह कलयतां वशीकुर्वतां मध्ये गुणानां सत्त्वादीनां साम्यं अव्याकृतं प्रकृतिः गुणानिधर्मि
णी औत्पत्तिकः स्वाभाविको यो गुणः सोऽहं २० सूत्रं प्रथमकार्यं महान्महत्तत्त्वं सूत्रोपाधित्वात् दुर्ज्ञेयत्वाच्च
जीवस्य स्वरूपत्वं बुद्धेर्गुणानां गुणेन चैव माराग्रमात्रो ह्यपरोऽपि दृष्ट इति श्रुतेः ११ वेदानां सर्वं धीते षाम
यकः पदानि त्रिपदा गायत्री स्पष्टः १२।१३ हविर्धानी कामधेनुः १४।१५ नक्षत्रौषधीनां प्रभुं सोमं यक्षरक्षसाम

अहं गतिर्गतिमतां कालः कलयतामहं गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः १०।
गुणिनामप्यहं सूत्रं महतां च महानहं सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ११ हिरण्यगर्भो वे
दानां मन्त्राणां प्रणवस्त्रिवृत् अक्षराणामकारोऽस्मि पदानि छन्दसामहं १२ इन्द्रोऽहं सर्वदेवानां
वसूनामस्मि हव्यवाट् आदित्यानामहं विष्णू रुद्राणां नीललोहितः १३ ब्रह्मर्षीणां भृगुरहं रा
जर्षीणामहं मनुः देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु १४ सिद्धेश्वराणां कपिलः सुपर्णोऽहं प
तत्रिणां प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा १५ मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरं सोमं
नक्षत्रौषधीनां धनेशं यक्षरक्षसां १६ ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुं तपतां द्युमतां सू
र्यं मनुष्याणां च भूपतिं १७ उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनं यमः संयमतां चाहं सर्पा
णामस्मि वासुकिः १८ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणां आश्रमाणामहं तुर्यो वर्णानां
प्रथमोऽनघ १९ तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहं आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मतां

भुं १६ यादसां प्रभुं तपतां तापवतां द्युमतां दीप्तिमतां च मध्ये १७ संयमतां दण्डयतामिति स्पष्टः १ शृङ्गिणां दंष्ट्रि
णां च मध्ये तेषां मध्ये तुर्यः संन्यासः प्रथमः ब्राह्मणः १९ स्रोतसां प्रवहतां चरसां स्थिरोदकाशयानां
२० ॥ रामः रामः रामः

धिष्ण्यानां निवासस्थानानां गहनानां दुर्गमाणां २१ ब्रह्मिष्ठानां वेदार्थनिष्ठानां सेनान्यां च सेनापतीनां अग्र
ण्यां सन्मार्गप्रवर्तकानां अजः ब्रह्मा २२ शुचीनां शोधकानामपि मार्जनतर्पणप्रक्षालनादीनां मध्ये वाय्वाद्या[त्मा]
हि रूपः शोधकोऽहं २३ योगानां योगाङ्गानामष्टानां मध्ये आत्मसंरोधः समाधिरहं मन्त्रो नीतिः कौशलानां
विवेकादिनैपुणानां मध्ये आन्वीक्षिकी आत्मानात्मविवेकविद्या आख्यात्यन्यथाख्यात्यात्मख्यातिरस
त्ख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादीनां एवमिदमेवेति यादृच्छिको विकल्पः सोऽहं २४ कुमारः सनत्कुमारः

धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः वनस्पतीनामश्वत्थ ओषधीनामहं यवः २१
पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः २२ य
ज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनं वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः २३ योगा
नामात्मसंरोधो मन्त्रोऽस्मि विजिगीषतां आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनां
२४ स्त्रीणां तु शतरूपाहं पुंसां स्वायम्भुवो मनुः नारायणो मुनीनां च कुमारो ब्रह्मचारिणां
२५ धर्माणामस्मि संन्यासः क्षेमाणामबहिर्मतिः गुह्यानां सूनृतं मौनं मिथुनानामजस्त्व
हं २६ संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभि
जित् २७ अहं युगानां च कृतं धीराणां देवलोऽसितः द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आ[त्मवान्]

२५ संन्यासः भूताभयदानं क्षेमाणां अभयस्थानानां मध्ये अबहिर्मतिः अन्तर्निष्ठा सूनृतं प्रियवचनं मौ
नं चेति न हि प्रियमसत्यं मौनेन च गुह्यस्याभिव्यक्तिर्न जायते अजः प्रजापतिः यस्य देहार्धात् मिथुनमभूत् स एवमुच्यते
मिथुने श्रेष्ठत्वाच्च आत्मनोऽपत्यत्वेनोक्तिरिति कृते २६ अनिमिषामप्रमत्तानां मधुमाधवौ वसन्तर्तू ऋतूनां अभिजि
त् उत्तराषाढाचतुर्थपादः तथा च श्रुतिः अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्ताच्छ्रोणाया इति २७

भगवतांउत्पत्तिंप्रलयंचैवभूतानामागतिंगतिंवेत्तिविद्यामविद्यांचसवाच्योभगवानित्येवंलक्षणानां २९ पेश
सांसुंदराणांदर्भजातीनांकाशदूर्वादीनांहविष्षुचरुपुरोडाशादिषुघृतंवा ३० लक्ष्मीःधनादिसंपत् ३१ बल
वतांओजश्चसहश्चसात्वतांभागवतानांभक्त्याकृतंकर्माहमित्यर्थः तेषामेवनवव्यूहार्चनेवासुदेवसंकर्षण
प्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहवामनाइतियानवमूर्त्तयस्तासांमध्येवासुदेवाख्या ३२ गं।

वासुदेवोभगवतांत्वंतुभागवतेष्वहं किंपुरुषाणांहनुमानविद्याध्राणांसुदर्शनः २
९ रत्नानांपद्मरागोस्मिपद्मकोशःसुपेशसां कुशोस्मिदर्भजातीनांगव्यमाज्यंहविष्वहं
३० व्यवसायिनामहंलक्ष्मीःकितवानांछलग्रहः तितिक्षास्मितितिक्षूणांसत्वंसत्ववतामहं ३१ ओजःसहोबलवतांकर्माहंविद्धिसात्वतां सात्वतांनवमूर्त्तीनामादिमूर्त्तिरहंप
रा ३२ विश्वावसुःपूर्वचित्तिर्गंधर्वाप्सरसामहं भूधराणामहंस्थैर्यंगंधमात्रमहंभुवः
३३ अपांरसश्चपरमस्तेजिष्ठानांविभावसुः प्रभासूर्येंदुताराणांशब्दोहंनभसःपरः ३४
ब्रह्मण्यानांबलिरहंवीराणामहमर्जुनः भूतानांस्थितिरुत्पत्तिरहंवैप्रतिसंक्रमः ३५
गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणं आस्वादश्रुत्यवघ्राणमहंसर्वेंद्रियेंद्रियं ३६

र्वाणांविश्वावसुः अप्सरसांपूर्वचित्तिःगंधमात्रंअविकृतं ३३ परमःमधुरःपरःपरास्यःशब्दः ३४
अर्जुनःपार्थःभूतानांप्राणिनांप्रतिसंक्रमःप्रलयः ३५ गत्यादयःपंचकर्मेंद्रियव्यापाराःस्पर्शादयोज्ञानें
द्रियव्यापाराः तत्रलक्षणंदर्शनंसर्वेंद्रियाणामिंद्रियंतत्तदर्थग्रहणशक्तिरहमहं ३६ ॥ ॥ ॥

तदेवंतत्रतत्रनिर्द्धारेणतत्संबंधेनचविशेषतोविभूतीर्निरूप्येदानींसामान्यतःसर्वाअपिनिरूपयति
पृथिवीतिसार्द्धद्वयेनपृथिव्यादिशब्देतन्मात्राणिविवक्षितानि अहं अहंकारःमहान्महतत्वंएताःसप्त
प्रकृतिःविकृतयःविकारःपंचभूतानिएकादशेंद्रियाणिचेत्येवंषोडशसंख्याकःपुरुषोजीवःअव्यक्तंप्रकृ
तिःएवंपंचविंशतितत्वानितदुक्तंमूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्तषोडशकस्तुविका
रोनप्रकृतिर्नविकृतिःपुरुषइतिकिंचरजःसत्वतमइतिप्रकृतेर्गुणाअपरंब्रह्मचतदेतत्सर्वमहमेव ३७ किं
चएतत्प्रसंख्यानंएतेषांपरिगणनंएतेषांलक्षणतोज्ञानंचतत्फलंतत्वविनिश्चयश्चाहमेवएतदेवसंक्षिप्या
हमयेतिजीवेश्वररूपोद्विविधोयोभावःयश्चगुणगुणिरूपःयश्चैतेस्त्रैरूपःससर्वोपिमयाविनामद्व्य

पृथिवीवायुराकाशमापोज्योतिरहंमहान् विकारःपुरुषोव्यक्तंरजःसत्वंतमःपरं
३७ अहमेतत्प्रसंख्यानंज्ञानंतत्वविनिश्चयः मयेश्वरेणजीवेनगुणेनगुणिनावि।
नोसर्वात्मनापिसर्वेणनभावोविद्यतेक्वचित ३८ संख्यानंपरमाणूनांकालेनक्रि
यतेमया नतथामेविभूतीनांसृजतोण्डानिकोटिशः ३९ तेजःश्रीःकीर्तिरैश्वर्यंह्री।
स्त्यागःसौभगंभगः वीर्यंतितिक्षाविज्ञानंयत्रयत्रसमेंशकः ४०॥

तिरेकेणनास्तिअहमेव
सर्वमित्यर्थः ३८ ननुसामान्यतःकिमेवंसंक्षिप्यकथयसिपूर्ववन्निर्द्धारणसंबंधाभ्यांविशेषतःसर्वाः
कथयेतिचेत्तत्राहसंख्यानमितिसंख्यानंपृथिव्यादिपरमाणूनांकालेनमहतातदपिमयैवक्रियतेक्व।
त्वावक्तुंशक्यतेतथामेविभूतीनांसंख्यासंकर्तुंनशक्यतेकुतइत्यतआहसृजतोण्डानीतियदामयासृज्य
मानानांब्रह्माण्डानामेवतावत्संख्यानास्तितदाकुतःतद्गतानांविभूतीनांसंख्येत्यर्थः ३९ तथापिवि
शेषतएवसर्वाअपिसंक्षेपतःकथयामीत्याहतेजःप्रभावःश्रीःसंपत्सौभगंमनोनयनोत्सवकत्वंभ

उपसंहरति।एता इति।एताः।ते च विभूतिभेदा मयि चित्तावधारणाय कथिताः अतो नात्रातीवाभिनिवेशः कर्तव्य
इत्याह मनोविकारा एवैते न तु परमार्थाः यथा किंचित्खपुष्पादि वाङ्मात्रेणाभिधीयते ४१ तस्माद्वागादीन्नियं
च्छ आत्मानं बुद्धिं आत्मना मनसा संयच्छ यत्नयातयैव नियच्छ अध्वने संसारमार्गाय ४२ असंयमने दोषमाह य इ
ति असंयच्छन् न संयच्छति ४३ परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ४४ लोकाः षोडशः १६ ततः सप्तद।
शे च स्वधर्मैर्भक्तिलक्षणं हंसोक्तं धर्ममन्वाह वर्णस्य चाश्रिगृहस्थयोः १ कर्मोहविद्धि सात्वतामित्यत्र भक्त्या

एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः मनोविकारा एवैते यथा वाचाभिधीयते
४१ वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च आत्मानमात्मना यच्छ न भूयः कल्पसे
ऽध्वने ४२ यो वै वाङ्मनसी सम्यगसंयच्छन्धिया यतिः तस्य व्रतं तपो दानं स्रवत्यामघ=
टाम्बुवत् ४३ तस्माद्वचो मनः प्राणान्नियच्छेन्मत्परायणः मद्भक्तियुक्तया बुद्ध्या ततः
परिसमाप्यते ४४ इति श्रीभाग० ११० स्कंधे महाविभूतिनिर्देशो नाम षोडशोऽध्यायः १६ उद्ध
व उवाच यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः वर्णाश्रमाचारवतां सर्वेषां द्वि
पदामपि १ यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् स्वधर्मेणारविंदाक्ष तन्ममाख्यातु

क्तं कर्म मोक्षसाधनं मद्भिन्न इति इत्युक्तं भक्तिसाधनत्वं च कर्मणां मयोदितेष्ववहितः स्वधर्मेष्वित्यादि
ना तत्र तत्रोक्तं तत्र कर्मानुष्ठानेनैव नियमेन भक्तिर्न दृश्यते अतः पृच्छति यस्त्वयेति सप्तभिः पूर्वं कल्पा
दौ त्वद्भक्तिलक्षणः तज्ज्ञापकः तत्साधनमित्यर्थः वर्णाश्रमहीनानामपि द्विपदां नराणां १ यथा
येन प्रकारेणानुष्ठीयमानेन स्वधर्मेण २ ॥ ॥ ॥

ननु संप्रदायादेव ज्ञास्यते किं पुनर्वर्णनेनेत्यत्राह श्रुत इति परमकं परमश्रेयसो कं सुखरूपं ज्ञातं यत्त्वं हे
स्वरूपेण धर्मो युक्त एवमनुयोगमात्रे ज्ञानीतमागतयत्नेयुष्माकं सविशेषतयेत्युक्तत्वात् ३ प्रागनुशासि
तोपि न भविता न भविष्यतीति ४ अत्र हेतुमाह वक्तेति द्वाभ्यां वैरिञ्च्यां ब्रह्मसभायां कलाः वेदाद्याः ५।६ तत्तस्मा
त् नः अस्माकं मनुष्याणां यथा येन प्रकारेण विधीयते ७ धर्मो धर्मी स्वयं तत्कृतः नैःश्रेयसकरः भक्तिजनकः
अतः मे मत्तः तं धर्मं निबोध ८ तत्रादौ मदुपासनालक्षण एव मुख्यो धर्म आसीत् आचारलक्षणस्तु ।

श्रुतः कित्वं महाबाहो धर्मः परमकः प्रभो येन वै संरूपेण ब्रह्मणाभ्यास्यमाधव ३ स
इदानीं सुमहता कालेनामित्रकर्शन प्रायो न भविता मर्त्ये लोके प्रागनुशासितः ४
वक्ता कर्ता विता नान्यो धर्मस्याच्युत ते भुवि सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः
५ कर्त्रा वित्रा प्रवक्त्रा च भवता मधुसूदन त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ६
तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः यथा यस्य विधीयेत तथा वर्णय मे प्रभो ७
श्रीभगवानुवाच धर्म एष तव प्रश्नो नैःश्रेयसकरो नृणां वर्णाश्रमाचारवतां त
मुद्धव निबोध मे ८ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः कृतकृत्याः प्रजा जात्या
तस्मात्कृतयुगं विदुः ९ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् उपासते तपोनिष्ठा हं

स्मां त्यक्तः स चैव मनुष्याणां भक्तिहेतुरिति वर्णयितुमाह आदाविति कल्पादौ यत्र कृतयुगे तस्मिन्ते च
तदा मामुपासत एव केवलेनान्यत्कुर्वन्तीति वक्तुं कृतयुगनामनिरुक्तिमाह कृतकृत्याः जात्या ज
न्मनैव ९ किंच विधायको मा वा दापि तदानीं नान्यत्कर्मास्तीत्याह वेद इति धर्मश्च मनो विषयो हं भवत् ।
वृषरूपधृक् चतुःपात् तु ज्ञानविषयो यज्ञादिः स्वतः तपोनिष्ठा मनःसंन्यासिनां चस्वैकाग्र्यपरमेत

प्रश्नात्रेतायुगप्रवेशेऽस्मिन्वैराजरूपस्य प्राणान्निर्मितान्हृदयात्स्वकाशात्तस्याः त्रय्याः सकाशाद्धोत्राध्वर्य
वौद्गात्रैः त्रिवृत्त्रिरूपः यज्ञो वै विष्णुरिति श्रुतेः ११ वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह विप्रा
दिभ्यः आत्माचारः स्वधर्माचरणलक्षणो ज्ञापको येषां १२ मम वैराजरूपस्य हृदः वक्षसोऽधस्तात् ब्रह्मचर्य।
मित्यन्वयः कामिश्रामं १३ तेषामधिकारविशेषणस्वभावानाह वर्णानामिति पञ्चभिः जन्मस्थानुसारिण्यः
नीचैरुच्चत्वमय आत्मापक्षे मदामिर्जन्मभूमिर्भेदाः उत्तमाभिरुत्तमाः ऽपेति १४ तपश्चालोचन १५ तेजः प्रता

त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ११ वि
प्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः १२ गृहा
श्रमो जघनतो ब्रह्मचर्यं हृदो मम वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः १३ वर्णानामा
श्रमाणां च जन्मभूम्यनुसारिणीः आसन्प्रकृतयो नॄणां नीचैर्नीचोत्तमोत्तमाः १४ शमो द
मस्तपः शौचं संतोषः क्षान्तिरार्जवं मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः १५ तेजो बलं धृतिः
शौर्यं तितिक्षौदार्यमुद्यमः स्थैर्यं ब्रह्मण्यमैश्वर्यं क्षत्रप्रकृतयस्त्विमाः १६ आस्तिक्यं दाननि
ष्ठा च अदम्भो ब्रह्मसेवनं अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः १७ शुश्रूषणं द्विजगवां
देवानां चाप्यमायया तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः १८ अशौचमनृतं स्तेयं ना
स्तिक्यं शुष्कविग्रहः कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनां १९ अहिंसा सत्यम
स्तेयमकामक्रोधलोभता भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः २०॥

पः १८।१७।१८ तैरेवा
श्रमस्वभावा अपि ज्ञेयाः तद्व्यानां स्वभावानाह अशौचमिति शुष्कविग्रहः निर्मूलकलहः तर्षः तृष्णा
१९ तत्र तावत्सर्वसाधारणं धर्ममाह अहिंसेति सार्ववर्णिकः इति वर्णग्रहणमुपलक्षणार्थं वर्णधर्मान्तरा

२४

॥ २० ॥

स्वधर्मं तावदाश्रमेषु च ब्रह्मचारिणो धर्मा वर्ण्यंते स च द्विविधः उपकुर्वाणको नैष्ठिकश्च तत्राद्यस्य धर्मा
वर्ण्यंते स च द्विविधः उपकुर्वाणको नैष्ठिकश्च तत्राद्यस्य धर्मानाह द्वितीयमिति नवभिः द्विजस्त्रैवर्णिकः
आनुपूर्व्यात् गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्याचार्येणाहूतो ब्रह्म वेदमधी
यीत चकारात्तदर्थं च विचारयेत् ११ किंच मेखलादीन् कुशांश्च दधत् तत्र अक्षशब्देनाक्षमाला कथ्यते ।
तः जटिलः अनभ्यंगादिना जातजटः तथा अधौतदद्वासोरक्तपीठः दंताश्च वासश्च दद्वासो सितधौतौ

द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः वसन्गुरुकुले दांतो ब्रह्माधीयीत चाहूतः २१
मेखलाजिनदंडाक्षब्रह्मसूत्रकमंडलून जटिलोधौतदद्वासोरक्तपीठः कुशान्दधत्
२२ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः नच्छिंद्यान्नखरोमाणि कक्षोपस्थगतान्यपि
२३ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयं अवकीर्णेवगाह्याप्सु यतासुस्त्रिपदां जपेत् २४
अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरांछुचिः समाहित उपासीत संध्ये द्वे यतवाग्जपन् २५ आ
चार्यं मां विजानीयान्नावमन्येत कर्हिचित् नमर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः २६ सायं प्रा
तरुपानीय भैक्ष्यं तस्मै निवेदयेत् यच्चान्यदप्यनुज्ञातमुपयुंजीत संयतः २७ ॥

तिना नियमस्य सः अधौतौ दद्वासा[२२] स चासावरक्तपीठश्चेति अरक्तं पीठमासनं यस्य सः २२ ज
पश्च उच्चारो मूत्रपुरीषोत्सर्गश्च जपोच्चारं तस्मिन् वाग्यतः मौनी भवेत् २३ रेतो बुद्धिपूर्वकं नावकिरे
त् नोत्सृजेत् ब्रह्मव्रतधरः अगृहस्थः स्वयमवकर्ये चेदवकीर्णे अवगाह्य स्नात्वा यतासुः कृतप्राणायामः
त्रिपदां गायत्रीं जपेत् २४ संध्ये च द्वे यतवाक् जपन्नुपासीत मध्याह्ने संध्यानिमित्तं मौनं नास्तीति द्विवचनं
२५।२६ अन्यदपि यत्संप्राप्तं तच्च निवेदयेत् तेनानुज्ञातं तु संयतः सन्नुपयुंजीत न स्वयं २७ ॥ ॥॥

यानशय्यासनस्थानैः यान्तं पृष्ठतो यानेन निवृत्तम् अग्रतस्तथा समीपशयनेन विश्रान्तं पादसंवाहनादिः । =
समीपासनेन आसीनं कृताञ्जलिर्नियोगप्रतीक्षया नातिदूरे वस्थाने नेत्यर्थः । २८ एवंभूतं व्रतं यस्य सः ।
२९ एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह यदीति षड्भिः असौ ब्रह्मचारी यदि छ =
न्दसां लोकं महर्लोकं ततो ब्रह्मलोकं चारोक्ष्यन् आरोढुमिच्छन्नित्यर्थः यद्वा छन्दसां लोकमिति ब्रह्मलो
क विशेषणं यत्र मूर्तिधराः कलाः स्युः सत्त्वात् तर्हि बृहद्व्रतः सन् बृहद्व्रतं नैष्ठिकं यस्य सः विन्यसेत्

शुश्रूषमाण आचार्यं सदोपासीत नीचवत् यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः
२८ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः विद्या समाप्यते यावत् बिभ्रद्व्रतमखण्डितं २९
यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपे गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ३० अ
ग्नौ गुरावात्मनि च सर्वभूतेषु मां परं अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ३१ स्त्री
णां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकं प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत्
३२ शौचमाचमनं स्नानं संध्योपासनमार्जवं तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्ज
नं ३३ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ३४
एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ३५

समर्पयेत् अधिकस्वाध्यायार्थं अधीतनिदिध्यासनार्थं वा ३० ब्रह्मवर्चः वेदाभ्यासजं तेजः तद्वान् ३१ त
स्यैव वनस्थयतिसाधारणधर्मानाह स्त्रीणामिति निरीक्षणं भावगर्भं क्ष्वेलनं परिहासः एवमादिकं त्यजे
त् मिथुनीभूतानग्रतस्त्यजेत् न पश्येदित्यर्थः ३२ तस्यैव सर्वाश्रमसाधारणधर्ममाह शौचमिति द्वाभ्यां
३३।३४ निष्कामनैष्ठिकस्यानुमानफलमाह एवमिति अमलः निष्कामत्वात् दग्धः कर्माशयो येन सः

उपकुर्वाणस्य समावर्तनप्रकारमाह अथेति अनंतरं द्वितीयमाश्रमं आविश्य न प्रविशत्विच्छन् यथा ॥
यथा वा द्विचारितवेदार्थः स्नायात् अभंगादिकं कृत्वा समावर्तनं कुर्यात्: ३६ नन्वाधिकारानुरूपमाश्र
मविकल्पमनुज्ञापयावाह गृहमिति सकामश्चेत्प्रव्रजेदित्यर्थः यद्वा आश्रमादाश्रमान्तरं गच्छेत् न अन्य
था अनाश्रमी प्रतिलोमं चानाचरेदित्यर्थः अमन्यरः इति पाठे रः स्वमतस्याश्रमनियमाभावस्यावस
मानत्वात् ३७ विवाहे नियमपूर्वकं वर्णधर्मः सहगृहस्थधर्मानाह गृहार्थीति सदृशीं सवर्णा अजुगु

अथानंतरमावेश्य न्यासाजिनाशितागमः । गुरुवेदविदां ... मोदितः
३६ गृहे वने च यो विशेत् ... जो ... आश्रमादाश्रमं गच्छेन्नान्यथा ... रेत्
३७ गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् । यवीयसीं तु वयसा यां सवर्णामनुक्रमात्
३८ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् । प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम्
३९ प्रतिग्रहे समन्यमानस्तपस्तेजोयशोनुदः । अयाच्यामेव जीवेत शिलैर्वा दोषदृक्त्वयोः ४०
ब्राह्मणस्य हि देहोऽयं तु क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ४१ ॥

प्सितां कुलतो लक्षणतश्चानिंदितां कामतस्तु यामन्यामुद्वहेत्तां सवर्णामनुतस्या अनंतरं तत्रापि वर्णा
क्रमेणोद्वहेदित्यर्थः तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमं ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मन
न इति स्मृतेः ३८ इज्यादयस्त्रैवर्णिकानामावश्यकधर्माः प्रतिग्रहादित्रयं तु वृत्तिः स च ब्राह्मणस्यैव
३९ तत्रापि मुख्यतमां वाच्यां वृत्तिमाह प्रतिग्रहमिति तपो याजनाध्यापनयोरपि कार्पण्यादिदोषा
पश्यन् शिलैः स्वामिन्यक्तैः क्षेत्रपतितैः कणिशैः ४० एवं च वृत्तिकार्पण्ये ब्राह्मणेन सोढव्यमित्याह

उञ्छनं नाम विपण्यादिपतितकणोपादानं शिलास्तसैकीकृत्य तथानुष्ठचित्तप्रमोदफलमाह शि
लोञ्छेति महान्तं स्वातिशयादिलक्षणं विरजं निःकामं सेवमानः गृह एव गृहस्थाश्रम एव नातिप्रसक्तः
अतिशयेन विरागेण युक्तः सन् शान्तिं समुपैति अधिकारी भवति ४४ एवमधनस्य महत्फलमुक्त्वा सधनानाम
प्याह त्रिभिः समुद्धरन्ति दारिद्र्याद्दुःखादुत्तारयन्ति विप्रमित्युपलक्षणं मत्परायणाः एकमपि ४५ राजत्वाद्विशेष
कर्माहरिस्याह सर्वा इति ४६।४७ सर्वेषामापद्वृत्तिमाह त्रिभिः पण्यैः विक्रयार्हैः ननु सुरालवणाद्यैः तत्राप

शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः मय्यर्पितात्मा गृह एव तिष्ठन्ना
तिप्रसक्तः समुपैति शान्तिं ४४ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् तानुद्धरिष्ये न चिराद
पद्भ्यो नौरिवार्णवात् ४५ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः आत्मानमात्मना धी
रो यथा गजपतिर्गजान् ४६ एवंविधो नरपतिर्विमानेनार्कवर्चसा विधूयेहाशुभं कृ
त्स्नमिन्द्रेण सह मोदते ४७ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् खड्गेन वापदाक्रां
तो न श्ववृत्त्या कथंचन ४८ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययापदि चरेद्वा विप्ररूपे
ण न श्ववृत्त्या कथंचन ४९ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियां कृच्छ्रान्मुक्तो न गर्
ह्येण वृत्तिं लिप्सेत कर्मणा ५० ॥

परान्तं आक्रान्तस्य खड्गेन क्षत्रियवृत्त्या वा आपदुपगतो मोनेतरो पा
पीयसीं वृत्तिमाश्रितः तस्मात्खड्गधारणेन पापीयसी विक्रया अन्यत्र तथापि हिंसातो वणिक्वृत्ति
रेव श्रेष्ठेति भगवतो न तु श्ववृत्त्या नीचवृत्त्या ४८ तत्र आपदि मृगयया विप्ररूपेण वा अध्यापनादिना
४९ कारवः प्रतिलोमजविशेषा वरुडादयः तेषां वृत्तिं कटादिक्रियां आपदुन्मुक्तस्तु न नीचकर्म
न वर्तेतेत्याह कृच्छ्रादिति ५० ॥ ॥

तस्यैवं तिस्रोवस्था मुक्त्वा पुनर्गृहस्थस्यावश्यकानि पंचयज्ञानाह वेदाध्यापनं ब्रह्मयज्ञः तेन ऋषीन् स्व
धाकारेण पितॄन् स्वाहाकारेण देवान् बलिहरणेन भूतानि अन्नाद्यैरन्नोदकादिभिः मनुष्यानिति तेषा
तस्य यथार्हं यथाविभवानुसारतः तेष्वाह्नरहः यथा विधिनेमानृणानीति ४९ आवश्यके धर्मसुल्काणस्यानु
सारेणा धर्मेणाह यदृच्छया उद्यमं विना उपार्जितेन वा स्वस्थेन स्वल्पेन नत्वल्पेन धनेन वा भृत्या
न पोषयन् ५० गृहस्थस्यापि नित्यानित्यमेवाह कुर्वीतेति त्रिभिः न प्रमाद्येत ईश्वरनिष्ठायां प्रमत्तो

वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथार्हतः । देवर्षिपितृभूतानि मनुष्यांश्चान्वहं यजेत् ॥
४९ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा । धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥
५० कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥
५१ पुत्रदाराप्तबंधूनां संगमः पान्थसंगमः । अनुदेहं वियंत्येते स्वप्नो निद्रानुगो यथा ॥
५२ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन् । न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥
५३ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् । तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत् ॥ ५४

न भवेत् ननु दृष्टार्थैककर्मासक्तस्य कथमप्रमादः विचारेणेत्याह विपश्चिदिति ५१ तत्रापि दृष्टे त्वास
क्तेरधिकत्वात्तेषां नश्वरत्वं प्रपंचयति पुत्रेति पान्थानामेकत्र संगमः पान्थानामेकत्र संगम एव तत्र हेतुः अनु
देहं प्रतिदेहं मृते वियंति नश्यंति निद्रानुवर्ती स्वप्नो निद्रापाये यथेति ५२ अतिथिवत् उदासीनः ५३ अ
स्याश्रमविकल्पमाह कर्मभिरिति गृहाश्रम एव तिष्ठेत् परिप्रजावान् तर्हि प्रव्रजेद्वा ५४ ॥

रामः
६८

उलूखलेन वा अश्मना वा कुट्टयति खंडयतीति तथा दंता एवोलूखलं यस्य स तथा ५ संचिनुयात् आहरे त् अन्यदा कालांतरे आहृतं कालांतरे नाददीत लब्धे नवे नवेऽन्नादौ पुराणं तु परित्यजेदिति नारदोक्तेः ६ कालचोदितान् आग्रहायणादीन् ७ किंच अग्निहोत्रमिति मुनेश्च नैगमैः वेदवादिभिः आम्नातानि ८ अथ निःकामस्य फलमाह एवमिति धमनिभिः शिराभिः संततः व्याप्तः यावज्जीवं कृतेन तपसा मुख्यं मां

अग्निपक्वं समश्नीयात्कालपक्वमथापि वा उलूखलाश्मकुट्टो वा दंतोलूखल एव वा ५ स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणं देशकालबलाभिज्ञो नाददीतान्यदाहृतं ६ वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् न तु श्रौतेन पशुना मां यजेत वनाश्रमी ७ अग्निहोत्रं च दर्शश्च पौर्णमासश्च पूर्ववत् चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ८ एवं चीर्णेन तपसा मुनिर्धमनिसंततः मां तपोमयमाराध्य ऋषिलोकादुपैति मां ९ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् कामायाल्पीयसे युंज्याद्बालिशः कोऽपरस्ततः १० यदासौ नियमेऽकल्पो जरया जातवेपथुः आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत् ११ ॥

स तत्त्वर्थः ऋषिलोकान् महर्लोकादीन् क्रमेण अपुनर्भावः अंतःकरणशुद्धिभक्तिद्वारा तत्त्वज्ञानेन मुच्यते प्रतिबंधकत्वाकल्पत्वेन क्रमेण मुच्यत इत्यतः इति ९ तं सकामिनं निंदति यस्त्विति निःश्रेयसं मोक्षफलं अल्पीयसे आविरिंच्यात् स्वल्पमेव तस्य १० एवं यावज्जीवं वर्तमानस्य मोक्षसिद्धिः तृतीयभागावसाने तु मरणे विरागोपि संन्यासाधिकारः यदि तु ततोऽर्वागेव स्वधर्माशक्तो भवेत् तदापि सम्यग्विरक्तः विरक्तो वा तत्राविरक्तस्य क्रमसमाह यदेति जातो वेपथुः कंपो देहे यस्य सः ११

६२

रामः॥

विरक्तं मत्वा हृदय इति १२ तत्रादौ कल्पमाह २ इष्टेति यथोपदेशं कृत्वा इष्टकपूर्वकं प्राजापत्येष्टामामिक्षा
स्वप्राणा आत्मनि १३ संन्यासे विघ्ना भवन्तीति तान्विगणय्य संन्यसेदेवेत्याशयेनाह विघ्नेति केनापि प्रापि
तं कुर्वन्तीत्याह अपि भिक्षां परं परं ब्रह्म १४ एवं प्रव्रजितस्य धर्मानाह विश्वपात्रेति परं कौपीनादन्यदु
सो परिधारयितुमिच्छति तर्हि कौपीनमाच्छादितेयावता तावन्मात्रं धारयेदित्यर्थः त्यक्तं शेषो द्वारास्य वि

यदा कर्मविपाकेषु लोकेषु निरयात्मसु । विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः
१२ इष्टापथ्योपदेशं मात्वा सर्वस्वमृत्विजे । अग्नीन्स्वप्राण आवेश्य निरपेक्षः परि
व्रजेत् १३ विघ्नस्य वै संन्य... मतो देवा दारादिरूपिणः । विघ्नान्कुर्वन्त्ययं त्वस्मानाक्रम्य

प२४

समियात् १४ विश्वपात्रेण निर्वासः कौपीनाच्छादनं परं । त्यक्तं न दण्डपात्राभ्यामन्यत्किं
चिदनापदि १५ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलं । सत्यपूतां वदेद्वाचं मनःपूतं
समाचरेत् १६ मौनानीहानिलायामा दण्डा वाग्देहचेतसां । न स्युर्यस्य स दण्डैर्वेणुभिर्न
भवेद्यतिः १७ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयेच्चरेत् । सप्तागारानसंक्लृप्तांस्तुष्येल्ल
ब्धेन तावता १८ ॥ नवनीतात्किंचिदपि न विश्वपात् दण्डपात्राभ्यां मितावश्यकजलपात्रादेरु
पलक्षणं १५ मनःपूतं मनसा सम्यग्विचार्य यच्छुद्धं तदाचरेत् १६ मौनं वाचो दण्डः अनीहा काम्यकर्मत्या
गो देहस्य प्राणायाम ... एते अत्र स्युर्यस्य दण्डः पद्मसनं सति अग्रहे उद्भव अग्रोध... दण्डैर्वेणुभिरिति वा
१७ चतुर्ष्विति ब्राह्मणादिषु वर्णेषु ... चतुर्विधेषु एव एव वा सम्भवे वा विगर्ह्यानभिशस्तपति
तान् असंक्लृप्तान् अत्राप्यलाभो भविष्यतीति पूर्वमनुद्दिष्टान् १८ ॥ ॥ ॥

बहिर्ग्रामात् पावितं प्रोक्षणादिभिः शोधितं विभज्य विष्णुब्रह्मार्कभूतेभ्यः शेषमित्यधिकाहरणं नि-
रस्तं याचितमिति पाठे माधुकरेण याचितमन्नं चेत् तर्हि विभज्य भुञ्जीत न त्वयाचितादिभेदेन चतुष्प्रमि-
त्यर्थः माधुकरे तु नैवेद्यं भैक्ष्येनान्येषु विद्यते तेन वैद्यकं हि यद्वद्न्त्रात्र तत्परमो तिकं बहिरिति स्मृतेः यद्वा तु
दाकेनापि याचितं चेत् तन्मध्ये तस्मै किंचिद्विभज्य दत्त्वेत्यर्थः १९ किं च एकश्चरेदिति आत्मन्येव क्री

बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः विभज्य पावितं शेषं भुञ्जीताशेषमाहृतं १९
एकश्चरेन्महीमेतां निःसंगः संयतेन्द्रियः आत्मक्रीड आत्मरत आत्मवान् समदर्शनः
२० विविक्तक्षेमशरणो मद्भावविमलाशयः आत्मानं चिन्तयेदेकमभेदेन मया मुनि
२१ अन्वीक्षेतात्मनो बंधं मोक्षं च ज्ञाननिष्ठया बंध इन्द्रियविक्षेपो मोक्ष एषां च संयमः
२२ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः विरक्तः क्षुल्लकामेभ्यो लब्ध्वात्मनि सुखं म
हत् २३ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत् पुण्यदेशसरिच्छैलवनाश्रम
वतीं महीं २४ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् संसिध्यत्याश्वसंमोहः
शुद्धसत्त्वः शिलान्धसा २५॥ डाकौतुकं यस्य आत्मन्येव रतः संतुष्टः आत्मवान् धीरः २०
विविक्तं क्षेमं निर्भयं शरणं स्थानं यस्य समः मयि भावेन विमल आशयो यस्य सः २१ बंधं मोक्षं च केन
बंधः केन वा मोक्ष इति तावाह बंध इति २२।२३ पुराणि महान्ति ग्रामास्तद्रहिताः व्रजा गोष्ठानि ता
न् सार्थान् यात्रिकजनसमूहान् २४ यतः शिलवृत्त्या प्राप्तेन तद्रीयेनान्धसा अन्नेन शुद्धसत्त्वः स
न् निवृत्तमोहः संसिध्यति मुच्यते २५॥ ॥ ॥ ॥

ननु मिथ्यात्वं विहाय कथं पि शिलान्नैष्प्रवृत्तिः स्यात् तत्राह नेति एतद्दृश्यमानं मिथ्यात्वाद्वस्तुतया न पश्येत्
यतो विनश्यति अतः इहामुत्र च लोके असक्तचित्तः सन् चिकीर्षितात् तत्तदर्थकर्मणो विरमेत् २६ ननु तथा
पि यावद्विनाशं सुखहेतुत्वात् तच्चिन्तावतः कुतो विरागः स्यात् तत्राह यदेतदिति एतज्जगत् समनसा स्वदेहमनो
वाक्प्राणैः संहतं सहितमहंकारास्पदं शरीरं च सर्वं तज्जन्यसुखं च आत्मनि मायामात्रमिति तर्केण स्व

नैतद्वस्तुतया पश्येद् दृश्यमानं विनश्यति । असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात्
२६ यदेतदात्मनि जगन्मनोवाक्प्राणसंहतं सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्म
रेत् २७ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः सलिंगानाश्रमांस्त्यक्त्वा चरेदविधि
गोचरः २८ बुधो बाल कवत्क्रीडेत्कुशलो जडवच्चरेत् वदेदुन्मत्तवद्विद्वान्गोचर्यां
नैगमश्चरेत् २९ ॥

ग्राहिदृष्टांतेन त्यक्त्वा स्वस्थ आत्मनिष्ठः सन् पुनः तन्न स्मरेत् न चिंतयेत् २७ एवं च
हृदकादिधर्मान्त्यक्त्वा परमहंसधर्मानाह ज्ञाननिष्ठ इति सार्द्धैर्दशभिः वहिर्विरक्तो मुमुक्षुः सन् [illegible] नेनि
ष्ठो वा मोक्षेप्यनपेक्षो मद्भक्तो वा सलिंगान् त्रिदंडादिसहितान् आश्रमान् धर्मान् त्यक्त्वा तदासक्तिं त्यक्त्वा
यथोचितधर्मं चरेत् इत्यर्थः न पुनरत्यंतत्याग एव विवक्षितः पुनर्द्धर्मविधानात् अक्रियत्वस्योत्तराध्याये
वक्ष्यमाणत्वाच्च तर्हि पूर्वस्मात्को विशेषः तमाह अविधिगोचरः विधिकिंकरो भवेदिति एतदेव स्फुटी
करिष्यति शौचमाचमनं स्नानं न तु चोदनया चरेदित्यादिना २८ कथं चरेत् तदाह बुधः विवेकवान्
पि बालकवत् मानापमानविवेकशून्यः कुशलः निपुणोपि जडवत् फलानुसंधानाभावेन विद्वान् पं
डितोपि उन्मत्तवत् लोकरंजनाभावेन नैगमः वेदार्थनिष्ठोपि गोचर्यां अनियताचारमिव २९ ॥

वेदवादरतः कर्मकांडव्याख्यानादिनिष्ठः हैतुकः केवलतर्कनिष्ठः शुष्कवादे निःप्रयोजनगोष्ठ्यां
विवादस्तस्मिन् ३० अतिवादान् जनस्य दुरुक्तानि ३१ आत्मदृष्ट्या नावैरकारणं नास्तीत्युक्तं एक एवे
तिसहदृष्ट्यापि नास्तीत्याह भूतानि च देहा अपि कारणरूपेणैकात्मकानि ३२ दैवतंत्रितं दैवाधीनं यतः
३३ ननु सर्वं दैवतंत्रितं जन्ममरणयोरपि दैवतंत्रितत्वात् अलं तर्हि मिताशयत्वेनापि तत्राह आहा

वेदवादरतो न स्यान्न पाषंडी न हैतुकः शुष्कवादविवादेन कंचित्पक्षं समाश्रयेत् ३०
नोद्विजेत जनाद्धीरो जनं चोद्वेजयन्न तु अतिवादांस्तितिक्षेत नावमन्येत कंचन ३१
देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः
यथेंदुरुदपात्रेषु भूतान्येकात्मकानि च ३२ अलब्ध्वा न विषीदेत काले कालेऽशनं
क्वचित् लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतंत्रितं ३३ आहारार्थं समीहेत युक्तं तत्प्राण
धारणं तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ३४ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठ
मुतापरं तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ३५ शौचमाचमनं स्नानं न तु चोद
नया चरेत् अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः ३६॥

रमात्रार्थं समीहेतैव यतः त
स्य प्राणधारणं युक्तं सम्यक् कथं तेन प्राणधारणेन तत्त्वं विचार्यते किं तेनापि तदाह तद्विज्ञायेति ३४ त
र्हि किं मिष्टान्नादिकमप्यात्मार्थमेव केनेव युक्तमित्याह यदृच्छयेति ३५ यथाहमीश्वरो लीलया चरामि
तथा ज्ञानविज्ञाननिष्ठः अनासक्तः कुर्यात् ननु किंकरत्वेन तस्य ज्ञाननिष्ठाविरोधादिस्पर्शः

कुतो विधिकिंकरत्वाभावस्तस्येत्यत आह नहीति तस्य विकल्पाख्या भेदप्रतीतिः नन्वस्ति सा सत्यं या चासी
त्सापि मद्वी॰ क्षया हतानेन हता ननु न हताप्यनुवर्तमानत्वात्तत्राह आदेहांतात् क्वचित्कदाचित् बाधि
तैव ख्यातिर्भवति ३७ न त्वेवं विरक्तस्यापरोक्षज्ञानवतः संन्यास उक्तः मुमुक्षोस्तु केवलवैराग्यवतो विवि
दिषासंन्यासमाह दुःखोदर्केष्विति अजिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनं येन सः ३८ मामेव मद्दृष्ट्यैव गुरुं पा

नहि तस्य विकल्पाख्या या च मद्वीक्षया हता आदेहांतात् क्वचित्ख्यातिस्ततः संपद्यते म
या ३७ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् अजिज्ञासितमद्धर्मो गुरुं मुनिमुप
व्रजेत् ३८ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः यावद्ब्रह्म विजानीयान्मामेव गुरु
मादृतः ३९ यस्त्वसंयतषड्वर्गः प्रचंडेंद्रियसारथिः ज्ञानवैराग्यरहितस्त्रिदंडमुपजीव
ति ४० सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा अविपक्वकषायोऽस्मादमुष्माच्च वि
हीयते ४१ भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः गृहिणो भूतरक्षेज्या द्विजस्या
चार्यसेवनं ४२ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदं गृहस्थस्याप्यृतौ गंतुः सर्वे

रिचरेत् ततः परमेकत्वं ब्रह्मेत्यादिधर्मैर्वर्तेत इति भावः ३९ अनधिकारिणः संन्यासं निंदति द्वाभ्यां यस्त्विति
प्रचंडोऽत्यासक्त इंद्रियसारथिर्बुद्धिर्यस्य सः ४० सुरान् यज्ञभागान् देवान् आत्मानं च आत्मस्थं मां च नि
ह्नुते प्रतारयति निह्नवफलमाह अस्मादिति ४१ चतुर्णां प्रधानधर्मानाह भिक्षोरिति ४२ अन्यधर्मान्
कांश्चित् गृहस्थस्याप्यतिदिशति ब्रह्मचर्यमिति शौचं रागादिराहित्यं तस्य ब्रह्मचर्यप्रकारमाह ऋतौ गं

एवंभूतवर्णाश्रमधर्मफलमाह इतिमामिति दृढांमद्भक्तिंविंदते ४४ ततःकिमत आह भक्त्येति महेश्व
रत्वेहेतुः सर्वोत्पत्त्यप्ययं सर्वस्योत्पत्त्यप्ययौयस्मात् अतएवतत्कारणंमांब्रह्मस्वरूपंवैकुंठनिवासिनं
यद्वाब्रह्मणोवेदस्यकारणंमांउपयाति सामीप्येनप्राप्नोति ४५ ततश्चासौमुक्तएवेत्याह इति एवंभूता
नस्वधर्मेणनिर्णिक्तंशुद्धंसत्त्वंयस्यसः अतएवनिर्ज्ञाताममगतिरैश्वर्यंयेन ४६ उक्तमर्थंसंक्षिप्याह।

इतिमांयः स्वधर्मेणभजेन्नित्यमनन्यभाक् सर्वभूतेषुमद्भावोमद्भक्तिंविंदतेदृढां
४४ भक्त्योद्धवानपायिन्यासर्वलोकमहेश्वरं सर्वोत्पत्त्यप्ययंब्रह्मकारणंमोपयाति
सः ४५ इतिस्वधर्मनिर्णिक्तसत्त्वोनिर्ज्ञातमद्गतिः ज्ञानविज्ञानसंपन्नोनचिरात्समुपै
तिमां ४६ वर्णाश्रमवतांधर्मएषआचारलक्षणः सएवमद्भक्तियुतोनिःश्रेयसकरः
परः ४७ एतत्तेभिहितंसाधोभवान्पृच्छतियच्चमांयथास्वधर्मसंयुक्तोभक्तोमांसमिया
त्परं ४८ इतिश्रीभागवते०ए०भगवदुद्धवसंवादेयतिधर्मनिर्णयोऽष्टादशः १८ ॥

यएषआचारलक्षणःपितृलोकप्राप्तिफलःमद्भक्तियुक्तःमदर्पणेनकृतः ४७ प्रकरणार्थमुपसं
हरति एतत्तेभिहितंयथाभक्तोभूत्वामांपरंआप्नुयादिति ४८ इत्येकादशेऽष्टादशः १८ ज्ञानादेर्नि
र्णयःपूर्वंकृतोऽथाश्रमधर्मतः एकोनविंशतितमेज्ञानादेस्त्यागउच्यते २॥ ॥ ॥

तदेवं तर्कितो बाधितोऽपि देहादिप्रपंचो यावदपरोक्षानुभवेन दृश्यो हादिरिव न लीयते तावत् ज्ञानाभ्या ॥
सक्तो मुक्तिरित्युक्तं आदेहानान्तकंचित्त्यागो नितरां सम्पद्यते ऽपेत्यादिना यस्याप्यपरोक्षानुभवे ॥
न प्रपंचो लीयते न प्रायस्तस्य न किंचित्कृत्यमस्तीत्याह य इति विद्या अनुभवः तपस्तेन स्फुटेन सं
पन्नः अत एव आत्मवान् आत्मात्मतत्त्वं ज्ञानमानिकः केवलपरोक्षज्ञानवान् भवति अनेका
रणादेशाकं कृत्यमनुकूलतर्केण निर्णीतार्थः स्थपदः स इत्येवं तत्त्वनिर्वृतिसाधनं च मयि मायामात्र ॥

श्रीभगवानुवाच । यो विद्याश्रुतसम्पन्न आत्मवान्ज्ञानमानिकः । मायामात्रमिदं ज्ञात्वा
ज्ञानं च मयि सन्न्यसेत् १ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः स्वर्गश्चैवापवर्गश्च
नान्योऽर्थो मदृते प्रियः २ ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ज्ञानी प्रियतमोऽतो मे ।
ज्ञानेनासौ बिभर्ति मां ३ तपस्तीर्थं जपो दानं पवित्राणीतराणि च नालं कुर्वन्ति तां सि
द्धिं या ज्ञानकलया कृता ४ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ज्ञानविज्ञा
नसम्पन्नो भज मां भक्तिभावितः ५ ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि सर्व

मिति ज्ञात्वा ज्ञानं च तत्साधनं च सन्न्यसेत् अयमेव विद्वत्संन्यासो नाम १ अत्र हेतुमाह ज्ञानिन इति यस्मा
दहमेव तस्येष्टः अपेक्षितः स्वार्थः फलं हेतुः तत्साधनं च संमतः स्वर्गोऽभ्युदयश्च अपवर्गः संसारनिवृत्तिश्च अतस्त
स्य न प्राप्यं कृत्यं वा किंचिदस्तीत्यर्थः २ अत्र हि दृगनुभवप्रमाणयति ज्ञानेति यद्यतो ज्ञानिनं मामिने इति ज्ञानीति य
यतोऽसौ ज्ञानेन मां धारयति ३ तस्य ज्ञानस्तोतितप इति अलं अलम्पर्णं ज्ञानस्य कलया लेशेन ४ ज्ञानेन सहितं त
त्यर्थं तथा भवति तथा ज्ञात्वा ज्ञानसंपन्नः सन्मामेव भज अन्यत्सर्वं त्यजेत्यर्थः ५ तस्य प्रत्यर्थं पूर्वेषां तमा

तदेवं ज्ञानं संक्षेपतः उपदिश्य तितिक्षयेति त्रिविधस्याध्यात्मिकादेर्विकारः देहादिः समाधानतु परमा=
र्थः यतः यस्मात् अन्तरा मध्य एवापतति निर्जीतः सर्पमालादिवत् नाद्यपवर्गयोः न त्वादावन्ते चास्ति अतः
यत् यदा अस्य विकारस्यामी जन्मादयः स्युः तदा तस्य तद्वाधिष्ठानभूतस्य किं न किंचित् स्युः तस्मा=
द्विवस्तुतो न संति तस्यासत्वादित्याह आद्यन्तयोरिति असतः सर्पादेराद्यन्तयोरस्तित्वादिति देवम
ध्येऽपि न तु सर्पादिति ह्येवं विकारो नास्तीत्यर्थः यद्वा आद्यन्तयोरस्ति तन्मध्येऽप्यस्त्येव तस्य जन्मादयः

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तरापतति नाद्यपवर्गयोर्यत् जन्मादयो
ऽस्य यदमी तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ७ उद्धव उवाच ज्ञानं विशुद्धं
विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणं आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं
च महद्विमृग्यं ८ तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश। पश्यामि ना
न्यच्छरणं तवांघ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ९ दष्टं जनं संपतितं बिलेऽस्मिन् का।
लाहिना क्षुद्रसुखोरुतर्षं समुद्धरैनं कृपयापवर्ग्यैर्वचोभिरासिंच महानुभाव १० ॥

संति अतस्त्वं निर्विकारं ब्रह्मेति ७ ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति ज्ञानमिति शुद्धं मे तत् ज्ञानं विपुलं नि
श्चितं यथा भवति तथा कथयेति महद्भिर्ब्रह्मादिभिर्विमृग्यं ८ महद्भिः मृग्यत्वमभिनयेनाह तापत्रयेणाभि
हतस्य अतः संतप्यमानस्य अंघ्रिद्वन्द्वमेवातपत्रं तस्मात् न केवलमातपत्रत्वात् किंतु अमृतमप्यभिवर्षति
यत तस्मात् ९ अतिकृपालुत्वादयन्नाह दष्टमिति अस्मिन्बिले संसारकूपे पतितं तत्र च कालाहिना
दष्टं एवमपि क्षुद्रसुखे एव उरुः तर्षस्तृष्णा यस्य तं रक्षमाणः कथं समुद्धरेणं पतति चेत्तत्राह आपव

तद्दिदृक्षासार्थं विहृत्य भार्यां निर्णीतिमहं वस्याम्याह इत्थमिति ११।१२ ज्ञानादिभिः उपबृंहितान् तत्सहिता
नित्यर्थः १३ तत्र ज्ञानं कथयति नवेति प्रकृतिपुरुषमहदहंकार पंचतन्मात्राणि एकादशेन्द्रियाणि पंच
महाभूतानि त्रयो गुणाः एतावान् अष्टाविंशतितत्वा [illegible] निभूतेषु ब्रह्मादिस्थावरान्तेषु कार्ये।
षु अनुगतानि येन ज्ञानेन ईक्षेत अपि च एषु भावेषु एकं परमात्मतत्वं अनुगतं येनेक्षेत कार्यकारण

श्रीभगवानुवाच इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरं अजातशत्रुः पप्रच्छ स।
र्वेषांनोनुशृण्वतां ११ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः श्रुत्वा धर्मान्बहून्।
पश्चान्मोक्षधर्मानपृच्छत १२ तानहं तेभिधास्यामि देवव्रतमुखाच्छ्रुतान् ज्ञानवि
ज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान् १३ नवैकादशपंचत्रीन्भावान्भूतेषुयेन
वै ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितं १४ ॥

त्मकं जगत् पश्येत् परमकारणात्मकमेवैतत् न तु ततः पृथगिति येन पश्येत् तज्ज्ञानमित्यर्थः १४॥

विज्ञानमाह एतदेवेति द्वाभ्यां एकेन येन तत् पदार्थेनैकेनानुगतानेकात्मका भावान् पूर्वमैक्षत तान् तथा
एव विलीनेक्षेत किं तु तदेकं परमकारणं ब्रह्मैव तदा एतदेव विज्ञानमुच्यते एतदुक्तं भवति परोक्षज्ञा।
नेनापरोक्षभ्रमस्य निवृत्तो हारिद्रिविनिवृत्त्यभावात्तदा जगत्पश्यन्नप्यात्मनः पृथक् सदिति न म
न्यते अपरोक्षज्ञानेन तु बाधितमेव जीवन्मुक्तः दग्धपटवत् संस्कारशेषं पश्यति ततः परं न पश्यति च
अतः परोक्ष ज्ञानं ज्ञानविज्ञानशब्दाभ्यामुच्येते इति एकेन सर्वकार्याणामनुगतिकार्याणां का
रणात्पृथक्सत्त्वं चोपपादयति सार्द्धेन तत्र प्रथमेन कदाचिदनीदृशं जगदित्याह मतेनैषां भावाना।

एतदेव हि विज्ञानं न तथैकेन येन यत् स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्म
नां १५ आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात् पुनस्तत्प्रतिसंक्रामे यच्छि
ष्येत तदेव सत् १६ ॥

मुत्पत्त्यादयो न स्युः न हि कारणस्यैकस्याभावादेकात्मतामिथ्यात्वं च न स्यात् अतस्तेषामुत्पत्त्या।
दीन् साधयति स्थितीति त्रिगुणात्मनां सावयवानामित्यर्थः विमता भावा उत्पत्त्यादिमन्तः सावय
वत्वात् घटादिवदिति पश्येत् १५ तत्र आदावुत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये चा
श्रयत्वेन सृज्यात् सृज्यं कार्यात् कार्यान्तरं प्रति यदन्वियात् अनुगच्छेत् तत्प्रतिसंक्रमे तेषां प्रलये
च यदवशिष्येत तदेव सदिति पश्येदित्यर्थः १६ ॥ ॥ ॥

वैराग्यमाह श्रुतिरिति द्वाभ्यां श्रुतिर्नेह नानास्ति किंचनेत्यादिः प्रत्यक्षं पटादिकार्यं तंत्वादिव्यतिरेके
णान दृश्यते चैतन्यव्यतिरेकेण न किंचिद्दृश्यत इति ऐतिह्यं महाजनप्रसिद्धिः अनुमानं विमतं मिथ्या
दृश्यत्वात् स्वप्नवत् एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन् विकल्पस्य च मिथ्यात्वात् ततो विरज्यते विरक्तो भ
वतीत्यर्थः १७ न च वेदोक्तस्वर्गादिसुखाशया न विरज्येतेत्याह कर्मणामिति आविरिंच्यात् ब्रह्म।

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयं प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्य
ते १७ कर्मणां परिणामित्वादाविरिंच्यादमंगलं विपश्चिन्नश्वरं पश्येददृष्टमा
पि दृष्टवत् १८ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेनघ पुनश्च कथयिष्यामि म
द्भक्तेः कारणं परं १९ श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनं परिनिष्ठा च पू
जायां स्तुतिभिः स्तवनं मम २० आदरः परिचर्यायां सर्वांगैरभिवंदनं मद्भक्तपूजा
भ्यधिका सर्वभूतेषु मन्मतिः २१ मदर्थेष्वंगचेष्टा च वचसा मद्गुणेरणं मय्यर्पणं
च मनसा सर्वकामविवर्जनं २२॥

लोकपर्यंतं अदृष्टमपि सुखं अमंगलं दुःखरूपं नश्वरं।
च पश्येत् १८ भक्तियोगं सकारणमाह भक्तियोगः पूर्वं उक्त एव तथापि तस्मिन् प्रीतिं प्राप्नुवते तुभ्यं पु
नश्च कथयिष्यामि १९ श्रद्धा पुरणादरः शश्वदिति सर्वत्रानुषज्यते मदनुकीर्तनं श्रवणानंत
रं मत्कथाव्याख्यानमित्यर्थः २०।२१ अंगचेष्टा लोककीक्रिया वचसा लौकिकेनापि मद्गु
णानामीरणं कथनं २२॥

रामः रामः रामः

मदर्थे मद्भजनार्थं तद्विरोधिनोर्थस्य च परित्यागः भोगस्य तत्साधनस्य चंदनादेः सुखस्य पुत्रोपला
लनादेः इष्टादिवैदिकं यत्कर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः २३ भक्तिः प्रेमलक्षणा संजाय
ते अस्य भक्तस्य अन्यः कोर्थः साधनरूपः साध्यरूपो वावशिष्यते सर्वोपि त्वत एव भवतीत्यर्थः २४ किं
बहुना चित्तमेवांतर्वहिर्निष्ठं अर्थानर्थयोः कारणमित्याह यदात्मनीति द्वाभ्यां परात्मनि मयी

मदर्थेर्थपरित्यागो भोगस्य च सुखस्य च इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः २३ ए
वं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनां मयि संजायते भक्तिः कोन्योर्थोस्यावशिष्यते
२४ यदात्मन्यर्पितं चित्तं शांतं सत्वोपबृंहितं धर्मं ज्ञानं स वैराग्यमैश्वर्यं चाभिपद्य
ते २५ यदर्पितं तद्विकल्पे इंद्रियैः परिधावति रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्य
यं २६ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनं गुणेष्वसंगो वैराग्यमैश्वर्यं चा
णिमादयः २७ उद्धव उवाच यमः कतिविधः प्रोक्तो नियमो वारिकर्षण कः शमः ।
को दमः कृष्ण का तितिक्षा धृतिः प्रभो २८ ॥ यदा चित्तमर्पितं तदा शुभान् धर्मादीन् प्राप्नोत्येव ।

२५ एतदेव व्यतिरेकेणाह यदर्पितमिति यदा न चित्तं विकल्पे देहगेहादावर्पितं सत्परिधावति तदाधिकं
रजस्वलमसन्निष्ठं च भवति तत् ज्ञानविपर्ययं अधर्मादिकं विद्धि २६ स्वाभिप्रेतान् धर्मादीनाचष्टे
धर्मो मद्भक्तिकृत् यतः स एव प्रोक्तः प्रकृष्ट उक्तः शास्त्रेषु २७ धर्मादीनां महाजनप्रसिद्धानामन्य
था व्याख्यातत्वात् यमादिष्वपि संख्यातः स्वरूपतो वा किंचिद्लक्षणं यस्यादिति संभावनया तद्विशेष

ष्टं अभ्यर्हितं धनं च किं २९ परेति विद्यादौ विशेषणं श्रीर्मंडनं ३०।३१ कः इति प्रश्नान् पृष्ट्वा नर्था
न् विपरीतान् अशमादीन् ३२ यमनियमानाह अहिंसेति त्रिभिः अस्तेयं मनसापि परस्वाग्रहणं आस्ति
क्यं धर्मे विश्वासः ३३ शौचं बाह्यमाभ्यंतरं चेति द्वयं अतोपि द्वादश नियमाः श्रद्धा धर्मादरः उभयोः
श्लोकयोर्ये स्मृताः ते यमा नियमाश्च यद्वा उभयोः प्रवृत्तनिवृत्तयोः मुमुक्षोर्यमा मुख्याः सकामस्य ।

किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षि।
णा २९ पुंसः किं स्विद्बलं श्रीमन् भगो लाभश्च केशव का विद्या ह्रीः परा का श्रीः किं सुखं
दुःखमेव च ३० कः पंडितः कश्च मूर्खः कः पंथा उत्पथश्च कः कः स्वर्गो नरकः कः स्वित्को
बंधुरुत किं गृहं ३१ कः आढ्यः को दरिद्रो वा कृपणः कः क ईश्व
रः एतान्प्रश्नान्मम ब्रूहि विपरीतांश्च सत्पते ३२ श्रीभगवानुवाच अहिंसा सत्यम
स्तेयमसंगो ह्रीरसंचयः आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयं ३३ शौचं जपस्त
पो होमः श्रद्धातिथ्यं मदर्चनं तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनं ३४ एते यमाः स
नियमा उभयोर्द्वादश स्मृताः पुंसामुपासितास्तात यथाकामं दुहंति हि ३५ ॥

नियमा मुख्याः स्मृताः इत्यर्थः ३४ तत्र हेतुमाह हि यस्मात् उपासिताः सेविताः संतः ते सांप्रवृत्तानां नि।
वृत्तानां च यथाकामं कामानुसारेण मोक्षमभ्युदयं दुहंति ३५ ॥ ॥ ॥

लाभं व्याचिख्यासुः प्रथमं भगं तन्नामैदेन व्याचष्टे लोके तयोरभेदप्रसिद्धेः भगो मा ऐश्वर्यं तच्च मे ऐश्वरो भावो
मदीय ऐश्वर्ये योरिषाड्गुण्यमित्यर्थः उत्तमो लाभस्तु मद्भक्तिः न पुत्रादि विद्या चात्मनि प्रतीतस्य भेदस्य बाधः
न ज्ञानमात्रं अकर्मसु जुगुप्सा हि यत्वदर्शने ह्रीः न लज्जामात्रं ४० गुणा एव श्रीः मंडनं न किरीटादि दुःखसु
खयोरत्ययः अतिक्रमः अननुसंधानं सुखं न भोगः विषयभोगापेक्षैव दुःखं न नाग्निदाहादि बंधमोक्ष

भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ४०
श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः दुःखं कामसुखापेक्षा पंडितो बंधमोक्षवित् ४१
मूर्खो देहाद्यहंबुद्धिः पंथा मन्निगमः स्मृतः उत्पथश्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ४२
नरकस्तम उन्नाहो बंधुर्गुरुरहं सखे गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ४३

इयं बाधो वेत्तीति स पंडितः न विद्वन्मात्रं ४१ अहं बुद्धिरित्युपलक्षणं देहगेहादिष्वहंममेत्यभिमानवान् मूर्ख
इत्यर्थः मन्निगमः मां निर्विरोधमयति प्रापयतीति यो निवृत्तिमार्गः स तु पंथाः सन्मार्गः न कंटकादिरहितः चि
त्तविक्षेपः प्रवृत्तिमार्गः उत्पथः कुमार्गः न तु चोराद्याकुलः सत्वगुणस्योदयः उद्रेकः स्वर्गः न इंद्रादिलोकः ४२
तमस उन्नाह उद्रेकः न तामिस्रादिर्गुरुरेव बंधुः न भ्रात्रादिः स चाहमेव यथाहं जगद्गुरुः एक एव परो बंधुर्वि
मे समुपस्थिते गुरुः सकलधर्मात्मा यत्राकिंचन गोहीरिति साधनभोगायतनं गृहं तच्च मानुष्यं मानु
षरूपं शरीरमेव न हर्म्यादि गुणैः संपन्न आढ्य उच्यते न धनी ४३ ॥ ॥

असंतुष्टः स दरिद्रो न निःस्वः यो ऽजितेंद्रियः स कृपणः शोच्यः न दीनः विषयेष्वनासक्तधीर्यः स ईशः
स्वतंत्रः न राजादिः गुणसंगः गुणेषु संगो यस्य सः विपर्ययः अनीशः एतच्च शमादिविपर्ययोपलक्षणा
र्थं ४४ उपसंहरति एत इति साधुमोक्षोपयोगितया एतच्च सर्वं गुणदोषयोर्विवेकायोद्धवेन पृष्टमिति।
तयोः संक्षेपतो लक्षणमाह किं बहुना वर्णितेन गुणदोषयोर्लक्षणमेतावन्न इत्याह गुणदोषयोर्दृशिर्द
र्शनं दोषः गुणस्तूभयदर्शनवर्जितः स्वभाव इति ४५ इत्येकादशे एकोनविंशः १९॥ विशेषयोग।
अथ [illegible]श्रोक्तं माकिंस्तानक्रियात्मकं गुणदोषव्यवस्थापनमधिकारिविभागतः २ गुणदोषदृशिर्दोषो

दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेंद्रियः गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ४४
एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः किं वर्णितेन बहुना लक्षणं गुणदोषयोः
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ४५ इति श्रीभागवते म० पु० ए० श्रेयोभेदवि
निर्णयो नामैकोनविंशतितमोऽध्यायः १९। उद्धव उवाच विधिश्च प्रतिषेधश्च निगमो हीश्वर
स्य ते अवेक्षतेऽरविंदाक्ष गुणं दोषं च कर्मणां १ वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजं
द्रव्यदेशवयःकालान्स्वर्गं नरकमेव च २॥

गुणस्तूभयवर्जित इत्युक्तं तदाक्षिपति विधिश्चेति पंच
भिः विधिश्च प्रतिषेधश्च ईश्वरस्य तव निगम आज्ञारूपो वेदः स च विधेयानां प्रतिषेध्यानां च कर्मणां गुणदो
षं च पुण्यपापफलरूपमवेक्षते १ उत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां विकल्पं भेदं च गु
णदोषरूपमवेक्षते प्रतिलोमानुलोमजं च गुणदोषतयैवावेक्षते प्रतिलोमजा उत्तमवर्णासु स्त्रीषु ही
नवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः अनुलोमजास्तूत्तमवर्णेभ्यः पुरुषेभ्यो हीनवर्णासु स्त्रीषु
जाताः मूर्धावसिक्ताम्बष्ठादयः तेषां च असत्त्वं सत्त्वं तु विशेषः प्रतिलोमानुलोमजा इति गुणदोषौ द्रव्यादी

रामः

तथापि मम तु ते किमायातं अत आह गुणदोषेति गुणदोषदृशिर्दोषः इति गुणदोषयोर्न्निराकृतत्वाद्गुणदो
षभिदादृष्टिमंतरेण तां विना निषेधविलक्षणं तव वचः कथं तच्च वचोंतरेण नृणां निःश्रेयसं कथं स्या
त् तत्रापि श्रोतव्यो मंतव्य इत्यादिसाधनविधेः नानुध्यायेद्बहूञ्छब्दान्वाचो विग्लापनं हि तदित्यादिनि
षेधस्य चावश्यकत्वादिति भावः यद्वा गुणदोषभिदादृष्टिमंतरेण निषेधविधिलक्षणमपि वचः कथं नु
तत्त्वमस्यादिवाक्यवन्निःश्रेयसपरं स्यात् सर्वस्य वेदस्य तत्परत्वांगीकारादित्यर्थः ३ ननु पितरो देवाश्च स
र्वज्ञाः सन्तु तादृग्दृष्टा मनुष्याः कथं चिध्यतिनेत्याह पित्रादीनां सर्वेषां तव त्वदाज्ञारूपो वेद एव चक्षुः श्रेयः

गुणदोषभिदादृष्टिमंतरेण वचस्तव निःश्रेयसं कथं नृणां निषेधविधिलक्षणं ३
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ४
गुणदोषभिदादृष्टिर्निगमात्तेन हि स्वतः निगमेनापवादश्च भिदाया इति ह भ्रमः ५
श्रीभगवानुवाच योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ज्ञानं कर्म च भक्तिश्च
नोपायोऽन्योस्ति कुत्रचित् ६ ॥

श्रेयं चक्षुः प्रमापकं कं अनुपलब्धेऽर्थे स्वर्गादौ च तथा साध्यसाध
नयोः इदमस्य साध्यं इदमस्य साधनं अत्रापि तदेवं गुणदोषदृष्ट्यभावेन निःश्रेयसं न घटते ४ किं च शास्त्रेणैव
विहिता भेददृष्टिः तस्मिन्नेव विषये शास्त्रं कथं निवर्तयेदित्याह गुणेति ते निगमात् त्वदाज्ञारूपाद्वेदादेव न
हि स्वतः यस्माद्यथा प्राप्तत्वेन न निवर्तेत इह स्फुटं भ्रमो भवति तेन निवर्त्यते इति ५ विषयाभेदेऽप्यधिकारिभेदेनाविरो
धं वक्तुं प्रथमं योगत्रयमाह योगा इति योग्या उपायाः त्रयः कर्मदेवताकांडैः प्रोक्ताः कर्म च निष्कामं श्रेयो
विधित्सया मोक्षसाधनेच्छया अन्य उपायो नास्तीति काम्यकर्मादिकं त्वावतपतितया चोत्तराध्याय

तेष्वधिकारिभेदमाह निर्विण्णानामिति द्वाभ्यां। इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेषु विर-
क्तानां अत एव तत्साधनं तत्कर्म त्यागिनां ज्ञानयोगः सिद्धिद इतरेषामन्वयः। अनिर्विण्णचित्तानां दुःख-
बुद्धिरहितानां अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः ७ यदृच्छया केनापि भाग्योदयेन ८ तत्र का-
म्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति निष्कामकर्मयोगाधि-
कारिणस्तु यथाशक्ति स च ज्ञानभक्तियोगाधिरोहणे तु तदधिकृतयोस्तु स्वल्पः तावत्सिद्धानां तु
न किंचिदिति तावधिकर्मयोगमाह तावदिति नवभिः कर्माणि नित्यनैमित्तिकानि यावता यावत् ९ क।

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामि-
नां ७ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् न निर्विण्णो नातिसक्तो भक्तियोगो-
ऽस्य सिद्धिदः ८ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता मत्कथाश्रवणादौ वा श्र-
द्धा यावन्न जायते ९ स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव न याति स्वर्गनरकौ
यद्यन्यन्न समाचरेत् १० अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ज्ञानं वि-
शुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ११॥

र्मयोगिनो ज्ञानभक्त्यधिकारोहप्रकारमाह स्वधर्मस्थ
इति अनाशीःकामः अफलकामः अन्यत् निषिद्धं नरकयानं हि हेतुर्वै विहितातिक्रमाद्धि निषिद्धा-
चरणाद्वा अतः स्वधर्मस्थितत्वान्निषिद्धवर्जनाच्च न नरकं न याति अफलकामत्वान्न स्वर्गमपीत्यर्थः
१० किं तु अस्मिंल्लोके अस्मिन्नेव देहे अनघः निषिद्धत्यागी अतः शुचिः निवृत्तरागादिमलः यदृच्छ-

अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति स्वर्गिणोपीति निरयिणः इति द्वाभ्यां तत्त्वेनोक्तं ज्ञान-
भक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनारकिशरीरं १२ अतो नरः स्वर्गतिं न कांक्षेत नारकीमिति द्वाभ्यां
तः यद्वा स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः अस्यापि कांक्षात्वात् पुनरपि मनुष्यो भवेयमित्यपि न
कांक्षेत यतो देहावेशान् देहाभिमानात् स्वार्थं प्रमाद्यति अवधानशून्यो भवति १३ अपि तु एतद्देहं साधकमि-
ति विद्वान् तत्त्वार्थसिद्धिदमपि मर्त्यं ज्ञात्वा अप्रमत्तः अनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत यत्नं।

स्वर्गिणोप्येतमिच्छन्ति लोकं निरयिणस्तथा साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकं १२
न नरः स्वर्गतिं कांक्षेन्नारकीं वा विचक्षणः नेमं लोकं च कांक्षेत देहावेशात्प्रमाद्यति
१३ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदं
छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिं खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलंपटः १५
अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः मुक्तसंगः परं बुद्ध्वा निरीह उपशाम्यति १६ नृ-
देहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारं मयानुकूलेन नभस्वतेरितं पुमान्भ-
वाब्धिं न तरेत्स आत्महा १७ ॥

कुर्यात् १४ अप्रमत्तो मुक्तसंगः सुखं प्राप्नोतीत्यत्र दृष्टान्तः छिद्यमानमि-
ति यमैः यमवन्निर्दयैः पुरुषैः कृतनीडं यस्मिन् तं स्वकेतं स्वस्थानं त्यक्त्वा अलंपटः अनासक्तः १५ दार्ष्टान्तिक-
माह अहोरात्रैः छिद्यमानमायुर्बुद्ध्वा भयेन वेपथुः कम्पो यस्य सः १६ एवमप्रयतमानं प्रमत्तं निन्दति नृदेहमि-
व प्राप्य तस्याध्याहारः यो भवाब्धिं न तरेत्स आत्महा तत्र हेतवः आद्यं सर्वफलानां मूलं एतदुपार्जितकर्मभिः स्व-
र्गप्राप्तेः किंच सुदुर्लभं उद्यमकोटिभिरपि प्राप्तुमशक्यं तथापि सुलभं यदृच्छया लब्धत्वात् तं च सुकल्पं

एवंतावद्विरक्तस्यवैराग्यद्वाराज्ञानभक्तिःसाधकंकर्मयोगमुक्त्वेदानींसम्यग्विरक्तस्यज्ञानयोगंतस्यच ।
ज्ञानप्राप्तेःपूर्वंकिंचित्कर्तव्यंवर्जनीयंचाहसार्धैर्नवभिःयदारंभेष्विति कर्मसुनिर्विण्णःदुःखदर्शनेनोद्विग्न
मनःतस्मात्सर्वत्रविरक्तःसंयतेंद्रियःसन् आत्मनोभ्यासेन आत्मविषयत्वेनिश्चलतया अचलंयथाभ
वतितथामनोधारयेत् १८ तत्रप्रथममेवात्यंतधारणासंभवात्तत्स्वभावानुसारेणवशीकरणमेवाह ।
यर्हि आशुभ्राम्यत्पापिष्ठंभवत्यनवस्थितंभवतितदा अनुरोधेनकिंचिदपेक्षापूरणद्वारेण १९ ननुनहिय

यदारंभेषुनिर्विण्णोविरक्तःसंयतेंद्रियः अभ्यासेनात्मनोयोगीधारयेदचलंमनः १८
धार्यमाणंमनोयर्हिभ्राम्यदाश्वनवस्थितं अतंद्रितो नुरोधेनमार्गेणात्मवशंनयेत्
१९ मनोगतिंनविसृजेज्जितप्राणोजितेंद्रियः सत्वसंपन्नयाबुद्ध्यामनआत्मव
शंनयेत् २० एषवैपरमोयोगोमनसःसंग्रहःस्मृतः हृदयज्ञत्वमन्विच्छन्दम्यस्ये
वार्वतोमुहुः २१ सांख्येनसर्वभावानांप्रतिलोमानुलोमतः भवाप्ययावनुध्यायेन्मनोया

यादेवमेवस्यात्तत्राहमनोगतिंतुनविसृजेत् नोपेक्षेतकिंतुअप्रमत्तःसन्सत्वयेत्यर्थः २० अनुरोधमा
र्गस्यदृष्टांतत्वेनानिरोधः अनुवृत्तिमार्गेणमनसःसंग्रहःपरमोयोगःतत्साधनत्वात् उपचारेणस्तुतिःयथा ।
अदांतस्यदमनीयस्यअर्वतःअश्वस्यहृदयज्ञत्वंस्वाभिप्रायापेक्षागतिमन्विच्छन्अपेक्षमाणअश्वधारकः
अश्वंकिंचितदृष्टिमनुवर्ततेतदाचरश्मिनातद्वत्स्ववगच्छतिनत्यजेदित्येतद्वदित्यर्थः २१ एवमीषद्वशी
कृतस्यमनसोत्यंतनैश्चल्योपायानाहसांख्येनतित्रिभिः सांख्येनतत्वविवेकेनसर्वभावानांमहदादिदेहांता
नांअनुलोमतःप्रकृत्यादिक्रमेणभवंप्रतिलोमतःपृथिव्यादिक्रमेणाप्ययंचअनुध्यायेत्प्रसीदतीति

निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ततश्चागमापायित्वेनावधिमत्त्वात्मदर्शनात्तदविवेकापन्नसंसा=
रे निर्विण्णस्य अतो विरक्तस्य ततश्चोक्तवेदिनः गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्य चिंतितस्य पुनः=
पुनरनुचिंतया दौरात्म्यं देहाद्यभिमानं त्यजति २३ किं च यमादिभिर्योगमार्गैः आन्वीक्षिक्या पदार्थशुद्धय
शोधनेन मम अर्चनध्यानादिभिर्वा प्रत्यक्षेनास्य वैलक्षण्यात्मदर्शयति एतैरुपायैर्योग्यं परमात्मानं मनः
स्मरेत् नान्यैः अतो न्यन्न कुर्यादित्यर्थः २४ ननु पापापत्ता प्रायश्चित्तं कार्यमेव तत्राह यदीति योगेन ज्ञानाभ्यासेनै=
व एतच्च मलस्यापि नामकीर्तनाद्युपलक्षणार्थं नान्यत्कृच्छ्रादि २५ ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वा

निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः मनस्त्यजति दौरात्म्यं चिंतितस्यानुचिंतया २२
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः २३
यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितं योगेनैव दहेदंहो नान्यत्तत्र कदाचन २५ स्वे स्वेऽधि=
कारे या निष्ठा स गुणः परिकीर्तितः कर्मणां जात्यशुद्धानामनेन नियमः कृतः गुणदोष
विधानेन संगानां त्याजनेच्छया २६ ॥

गुणः हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः तत्र च तन्निवर्तकत्वात्कृ=
च्छ्रादि प्रायश्चित्तं गुणः इति विधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेनैव कथं पापं दहेत् तत्राह स्वे स्व
इति सार्द्धेन स एव गुणः नेतरः तदुपपादयति यस्माद्विधिप्रतिषेधाभ्यामनेन गुणदोषविधानेन कर्मणां निय
मः संकोचः कृतः इत्येतत् आह जात्या उत्पत्त्यैव अशुद्धानां स च प्राप्तानां संगानां त्याजनेच्छया अयं भावः शुद्धस्य
शुद्धिर्नाम न प्रवृत्तेरस्यास्ति स्वाभाविकः प्रवृत्त्यैव तस्य मलिनत्वात् न च सहसा सर्वतो निवृत्तिः कर्तुं शक्य
ते अतः इदं न कर्तव्यं इदं च कर्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते यथा च न प्रवृ=
त्तिपरो वेदस्तथोत्तराध्याये वक्ष्यामः उत्पत्त्यैव हि कामेष्वित्यादिना अतो योगिनः स्वाभाविकप्रवृत्त्यभावा

भक्त्य विकारिणो भक्तियोगमाह जातश्रद्ध इति नवभिः मत्कथासु जातश्रद्धः अत एवान्येषु कर्मसु उद्विग्नः न
तु तत्फलेषु विरक्तः तदाह वेदेति यद्यपि वेद तथापि तत्परित्यागे अनीश्वरः अशक्तः २७ एवंभूतोपि श्रद्धा
लुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः सन् ततः तदनन्तरं मां प्रीत्या भजेत् विषयांस्तु सेवमानोपि तेषु प्रीतिं
न कुर्यादित्याह गर्हयन्निति २८ कथं भजेत किं वा ततो भवति तदाह प्रोक्तेनेति द्वाभ्यां अद्धा मत्कथायां मेश
श्रवणकीर्त्तनाभिध्यानादिना तत्र तत्रोक्तेन मां असकृत् नित्यं भजतः हृदय्याः हृद्गताः कामा नश्यन्ति २९ हृद

जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु वेद दुःखात्मकान्कामान्परित्यागेप्यनीश्वरः २७
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हय
न् २८ प्रोक्तेन भक्तियोगेन भजतो मासकृन्मुनेः कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते
२९ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ३०
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ३१ य
त्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् योगेन दानधर्मेण श्रेयोभिरितरैरपि ३२ सर्वं मद्भ
क्तियोगेन मद्भक्तो लभतेऽञ्जसा स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ३३ ॥

यमेव ग्रन्थिरहंकारः तत्स्वरूपकाः सर्वे संशयाः असंभावनादयः कर्माण्यनारब्धफलानि संसारहेतुभूतानि ३०
तदेवं व्यवस्थया अधिकारत्रयमुक्तं तत्र च भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युप
संहरति तस्मादिति त्रिभिः मदात्मनः मयि आत्मा चित्तं यस्य तस्य श्रेयः श्रेयःसाधनं ३१ तत्र हेतुः यत्कर्मभिरि
त्यादि इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि ३२ तत्सर्वं अञ्जसा अनायासेनैव ३३

स्वर्गमपवर्गंमद्धामचवैकुंठंलभतएव ३३ वांछातुनास्तीत्युक्तंयदिवांछंतीतितत्रहेतुमाहनकिंचिदिति
धीराःधीमंतःयतोममएकांतिनःमय्येवप्रीतियुक्ताःअतोमयादत्तमपिनगृह्णंतिकिंवक्तव्यंनवांछंतीत्य।
र्थः अपुनर्भवं आत्यंतिकमपिकैवल्यं ३४ तदुपपादयतिनैरपेक्ष्यंपरंप्राहुर्निःश्रेयसमनल्पकंतस्मान्नि।
रपेक्षमेवपरंउत्कृष्टंअनल्पकंमहत्निःश्रेयसफलंतत्साधनंचप्राहुःमेभक्तिःनिराशिषःप्रार्थनाशून्यस्य।
निरपेक्षस्यप्रार्थनाकारणाभूतापेक्षारहितस्यैवसाभवेत् मद्धामेनिरपेक्षस्ययाभक्तिःसानिराशिषोभवे

नकिंचित्साधवोधीराभक्ताह्येकांतिनोमम वांछंत्यपिमयादत्तंकैवल्यमपुनर्भवं
३४ नैरपेक्ष्यंपरंप्राहुर्निःश्रेयसमनल्पकं तस्मान्निराशिषोभक्तिर्निरपेक्षस्यमेभवे
त् ३५ नमय्येकांतभक्तानांगुणदोषोद्भवागुणाः साधूनांसमचित्तानांबुद्धेःपरमु
पेयुषां ३६ एवमेतान्मयादिष्टाननुतिष्ठंतिमेपथः क्षेमंविंदंतिमत्स्थानंयद्ब्रह्मपर
मंविदुः ३७ इतिश्रीभा०ए०स्कंधेविंशतितमोध्यायः २०॥

टिप्पणीः ३५ अनेनचप्रकारेण
सिद्धानांनगुणदोषाइतिविरोधपरिहारंसमुपसंहरतिनमयीतिगुणदोषैर्विहितप्रतिषिद्धैरुद्भवोयेषांतेगुणाः
पुण्यपापरूपाःसाधूनांविरक्तरागादीनांअतःसमचित्तानांअतएवबुद्धेःपरमीश्वरंप्राप्तानां ३६ काम्य
कर्मनिष्ठानांनिर्दिष्टान्नूतान्मुक्तिमार्गानुपसंहरतिएवमितिमेपथःमत्प्राप्त्युपायान्येअनुतिष्ठंतितेक्षेमंका।
लमायादिरहितंमल्लोकंविंदंतियत्परमंब्रह्मस्थानंतज्ज्ञाविदुः ३७ इत्येका दशोविंशः २०॥ ॥

जयति श्रीधरानंदः परानंदेन केसरी यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती १ ईलंनामिछयासंतः स्वमंतामसाहंसमयाहित्वीयबोधायकृतमेतन्नसर्वतः २ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणां कामिनां द्रव्यदेशादिगुणदोषाः प्रपंचिताः ३ तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं तत्र च ज्ञानभक्तिसिद्धानां न किंचिद्गुणदोषौ साधकानां तु प्रथमतो निषिद्धतकर्मनिष्ठानां पापाशंकि नित्यनैमित्तिककर्मसत्वसाधकत्वाद्गुणस्तदकरणं निषिद्धकरणं च तन्मलीनसकरणत्वाद्दोषः तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः विशुद्धसत्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्ति

श्रीभगवानुवाच य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् क्षुद्रान्कामांश्चलैः प्राणैर्जुषंतः संसरंति ते १ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः २ ॥

रेव गुणः तद्विरुद्धं सर्वमुभयेषां दोषः इत्युक्तं इदानीं ये तु न सिद्धानामपि साधकाः किंतु केवलं काम्यकर्मप्रधानाः तेषां सकलगुणदोषान्प्रपंचयिष्यन् आदौ तानतिबहिर्मुखान्निंदति य एतानिति मत्पथः मद्गमार्गान् क्षुद्रान् तुच्छान् चलैः अस्थिरैः प्राणैर्देहवायुभिरिंद्रियैर्वा जुषंतः सेवमाना भवंति ते संसरंति निखिलगुणदोषभावात्केन नानायोनीः प्राप्नुवंतीत्यर्थः १ ननु तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यं न ह्यग्निना केचित्तप्यंते केचिन्नेति संभवति तत्राह स्वे स्वे इति अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः २ ॥ ॥

नद्यादिष्वप्सु दोषादिति विचिकित्सार्थं योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविकप्रवृत्तिप्रतिषेधार्थमित्यर्थः।
तत्रास्वप्सु दोषो योग्यत्वायोग्यत्वे गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे शुभाशुभौ तन्निमित्तार्थान
र्थौ २ तत्राप्सु स्वप्सु दोषधर्मार्थं स्पृष्टेन धर्मः अस्पृष्टेनाधर्म इति गुणदोषौ व्यवहारार्थं अस्पृष्टावपि राजादी
नां व्यवहारदर्शनात् उपादेयं नान्यदिति शुभाशुभौ यात्रार्थं दोषवत्वेऽप्यपः शरीरनिरोहमात्रोपादाने
न पापं अधिकोपादानेन तु पापमिति मे या मन्वादिरूपेण धर्मरूपो धुरंधरं कर्मजडानामित्यर्थः ६ सु।

सुप्स्वप्सु दोषो विधीयते समानेष्वपि वस्तुषु इत्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ १
२ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ दर्शितोऽयं मयाचारो धर्ममुद्वहतां धुरं ३
४ भूम्यप्व्वग्न्यनिलाकाशा भूतानां पञ्च धातवः आब्रह्मस्थावरादीनां शारीरा आ
त्मसंयुताः ५ वेदेन नामरूपाणि विषमाणि समेष्वपि धातुषूद्धव कल्प्यन्त एतेषां
स्वार्थसिद्धये ६ देशकालादिभावानां वस्तूनां मम सत्तम गुणदोषौ विधीयेते नियमार्थं

स्वप्सु दोषप्रपञ्चविस्तरेण वेदोक्तत्वेन तदभिनिवेशो माभूदिति समानेष्वपि वस्तुष्विति षड्भिः श्लोकैस्तत्प्रपञ्चयति।
तिभूम्यादिभिः भूतानां प्राणिनां धारयन्तीति धातवः कारणानि शारीराः शरीरारम्भकाः देहिनः
सम्यक् जीवतो व्याह आत्मसंयुता इति ५ धातुषु देहेषु नामरूपाणि वर्णाश्रमादीनि कल्प्यन्ते याः प्र
योजनमाह एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ६ न केवलं दे
हेष्वेव अपि तु देशकालादिभावानामपि आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणं
वस्तूनां द्रव्याणां व्रीह्यादीनामपि मम यो नियमार्थं सङ्कोचार्थमित्यर्थः ७ ॥ रामः॥

ष्टवं गुणदोषविषयं परिज्ञेयत्वयोः शुद्ध्यशुद्धिमत्त्वात् शुद्ध्यशुद्धी प्रपंचयति अकृष्णसार इत्य
र्द्धमिः देशानां मध्ये कृष्णमृगहरिणरहितो ऽशुचिः तत्रापि अब्रह्मण्यः ब्राह्मणभक्तिशून्यो ऽत्यन्तमशुचिः
कृष्णसारोपि कृष्णमृगेण सारः श्रेष्ठोपि असौवीरः कीटकः सुवीराः मनुष्याः तद्वान् सौवीरः
कीटकोपि अशुचिः तदुक्तं सर्वेषु ण्यतमो देशः सत्यात्रेय यत्र लभ्यते इति तद्वर्जितो यः कीटकः अंगवंग
कलिंगादिः संस्कृतः संमार्जनादिशून्यः म्लेच्छबहुलो वा इरिणं ऊषरं एकड्डावः तत्र अशुचिः
तदन्यः शुचिरित्यर्थः उक्तं भवति च कालस्य शुद्ध्यशुद्धी दर्शयति कर्मण्य इति द्रव्यतः द्रव्यसंपत्त्या स्व
तो वा स्वतो वा आदित्यः कर्मण्यः कर्मार्हः स कालस्तस्मिन्कर्मणि गुणवान यतः यस्मिन् द्रव्यालाभेन वा

अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् कृष्णसारोऽप्यसौवीरकीकटासं।
स्कृतेरिणं च कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा यतो निवर्तते कर्म।
स दोषो ऽकर्मकः स्मृतः ॥ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च संस्कारेणा
प्यकालेन महत्त्वाल्पतयापि वा १० ॥

राष्ट्रविप्लवादिना वा कर्म निवर्तते यश्च स तत्कालो दोष
शाहादिलक्षणो ऽधर्मकः कर्मार्हः स्मृतः स कालो दोष अशुद्ध इत्यर्थः ॥ वस्तुशब्दोपातानां द्रव्याणां
शुद्ध्यशुद्धी दर्शयति द्रव्यस्येति चतुर्भिः द्रव्यस्य वस्त्रादेः द्रव्येण तोयादिना शुद्धिः मद्यादिनाऽशुद्धिः व
चनेन शुद्धमशुद्धं चेति संदेहे शुद्धमित्येवं रूपेण ब्राह्मणवचनेन शुद्धिः विपरीतेनाशुद्धिः संस्कारेण
प्रोक्षणादिना ऽभ्युक्षणादेः शुद्धिः तदुक्तं काले मेघोदकं ग्राह्यं वर्जयेत्तु अहमेव हि अकाले दशरात्रं स्यात्त
तः शुद्धिर्विधीयते इति पर्युषितान्नादेरशुद्धिः अल्पजाद्युपहतानां तडागादीनां महत्त्वाल्प।

शक्त्याशक्त्या सूर्योपरागादिरूतकालादेः शक्त्याशक्त्यशुद्धिः बालकमरणानन्तरमशक्तान्यतिशुद्धिः
कालवमरणानन्तरमशक्तानामतिशुद्धिः वृद्धातुरजन्मादेः शातातपादिहितानेनाशुद्धिः अन्तर्हीनेनाशुद्धिः सम
स्याजीर्णमलवहत्वादेः सम्यक् प्रलशुद्धिः दरिद्रं प्रतिशुद्धिः तत्रापि विशेषमाह यदीति एतच्च द्रव्यवचना
द्यो द्रव्यशुद्धिकारात्मनेपदं कुर्वीतेति देशावस्थानुसारत एव यथायथावत्कं कुर्वीतेति सर्वतः तथा
हि निर्भयएव देशे कुर्वीत न तु चौराद्याकुलेतथा रोगादिव्याकुलितेऽपि बालवृद्धावस्थायामेव कुर्वीत न बाल्यरोगा
द्यवस्थायामिति तथा च स्मृतिः देशकालं तथात्मानं द्रव्यं द्रव्यप्रयोजनं उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्प

शक्त्याशक्त्याथवा बुद्ध्वा सम्यक् द्व्याच्च यदात्मने अर्घं कुर्वीत हि यथा देशावस्थानुसार ॥
तः ११ धान्यदार्वस्थितन्तूनां रसतैजसचर्मणां कालवाय्वग्निमृत्तोयैः पार्थिवानां मृ
युतायुतैः अमेध्यलिप्तपात्रेण गंधलेपं व्यपोहति भजते प्रकृतिं तस्य तच्छौचं तावदिष्य

येत ११ द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव द्रव्यतस्तु शुद्धिर्बहुरूपेति तां प्रपंच
यति धान्येति दारु लौकिके गृहचमसादि च अस्थिगजदन्तादि रसा तैलघृतादयः तैजसाः सुवर्णादयस्ते
पार्थिवानां च रथ्याकर्दमघटेष्टकादीनां यथायथं कालादिभिः शुद्धिः तत्रापि काकांत्यजाद्युपघात
तारतम्येन देशकालावस्थाद्यनुसारेण चाएतैरमेध्ययुतायुतैः मिलितैः केवलैश्च कालस्य तु नग्रहणं
कृतत्वदेशनार्थं ११ अमेध्यरूपस्य शोधशुद्धिमत्कालेपविषये यादृश्यमीदृशपात्रवस्त्रादियेन तत्तृणादिना
मृदादिकादिना गंधं च लेपं च व्यपोहति भजति स्वगतं च मलं त्यक्त्वा प्रकृतिं स्वमेव रूपं भजते तस्य तत्
शौचं शोधकं यावत्ता तत्तृणादिना व्यपोहति तावत्स्वरूपतश्चावच्छिति तावत्कर्तव्यमिष्यते १२ ॥

॥ एवं तावद्द्रव्यशुद्धिरुक्ता इदानीं कर्तृशुद्धिमाह स्नानेनेति अवस्था कौमारादिः वीर्यं शक्तिः संस्कार उ
पनयनादिः कर्म संध्योपासनादि स्मृत्यादिलक्षणो आत्मनः साहंकारस्य कर्तुः एतैः स्नानादिभिर्यथायथं
तत्कार्यानुसारिणी शुद्धिः एवं च शुद्धिर्न व्यवहारार्था किंतु विहितकर्मार्थेत्याह शुद्ध इति द्विजः स्नानप्रल
क्षणोपलक्षणादिरपि ॥१३॥ मन्त्रशुद्धिमाह सद्गुरुमुखाद्यथावत्परिज्ञानं मन्त्रस्य शुद्धिः कर्मशुद्धिमाह मदर्प
णं कर्मणः शुद्धिः धर्मो ह्यपि शुद्धमशुद्धिप्रपंचं ततः प्रदर्श्योपसंहरति धर्म इति देशकालद्रव्यकर्तृम

स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माच
रेद्द्विजः ॥१३॥ मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणं धर्मः संपद्यते षड्भिरधर्मस्तु।
विपर्ययः ॥१४॥ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः गुणदोषार्थनिय
मस्तद्भिदामेव बाधते ॥१५॥

न्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते एतेषां यो विपर्ययः सोऽधर्मः तद्धेतुरित्यर्थः ॥१४॥ अयं च गुणदोष
विभागो न वास्तवः स्यात् क्वचिदिति आपदि प्रतिग्रहो गुणोऽन्यथा परिनिषिद्धत्वाद्दोषः परधर्मस्य परस्य
गुणोऽपि स्वस्य दोषः दोषोऽपि कुटुंबत्यागादिर्विरक्तादेर्न दोषः अपि तु विधिबलेन गुणः एवं चायं गुणदोष
योरेकस्मिन्नेवार्थे नियमः गुणदोषार्थं वा यो नियमः नियामकं शास्त्रं स तयोर्भेदमेव बाधते ॥१५॥ राम:

दोषस्य क्वचिददोषत्वाभावे गुणत्वं चोदाहरणं दर्शयति समानस्य तस्यैव कर्मणः सुरापानादेराचरणं। अपतितानां पतनहेतुरपि जातस्य कर्मणा वा पतितानां पुनः पातकं अधिकाराभावात् न भवति एवमेव पतितत्वात् अतो त्र दोषस्यापि दोषत्वाभावोस्तीत्यर्थः तथा हंसगोपि योपितै दोषः स गृहस्थस्यौत्पत्तिकः एव स्वीकृतो न दोषः अपि तु गुणः ऋतौ भार्यामुपेयादित्यादि विधानात् उभयत्र दृष्टान्तः एवमेवाधः शयानो यथा न पततीति १६ अतो गुणदोषनियमविधानो प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्याह यय

समानकर्माचरणं पतितानां न पातकं। औत्पत्तिको गुणः संगो न शयानः पतत्यधः १६
यतो यतो निवर्तेत विमुच्येत ततस्ततः। एष धर्मो नृणां क्षेमः शोकमोहभयापहः १७
विषयेषु गुणाध्यासात्पुंसः संगस्ततो भवेत्। संगात्तत्र भवेत्कामः कामादेव कलिर्नृ-
णां १८ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते। तमसा ग्रस्यते पुंसश्चेतना व्यापिनी
द्रुतं १९ तया विरहितः साधो जंतुः शून्याय कल्पते। ततोस्य स्वार्थविभ्रंशो मूर्छित-
स्य मृतस्य च २० विषयाभिनिवेशेन नात्मानं वेद नापरं। वृक्षजीविकया जीवन्व्यर्थं भ

तो यतः इति १७ यथाश्रुतप्रवृत्तिपरतो वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति विषयेष्विति चतुर्भिः प्रथमं विषयेषु गुणाध्यासात् रमणीयत्वबुद्धेः ततस्तेषु संगः आसक्तिः तत्र तेषु विषयेषु येन प्रतिहन्यते कामः तेन सह कामादेव कलिः कलहो विवादः १८ दुर्विषहस्तीव्रः तमः तं क्रोधं चेतना कार्याकार्यस्मृतिः द्रुतं शीघ्रं १९ शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्छितस्य मृतस्य तुल्यस्य २० ततस्तेन प्रपंचयति विषयेति नापरं आत्मानं देहादिकं व्यर्थं वृक्षजीविकयैव यो जीवन्वर्तते

ननु प्रत्यक्षस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंशः तत्राह इयं फलश्रुतिः न श्रेयः परमपुरुषार्थपरा न
भवतीत्यर्थः किंतु बहिर्मुखानां नृणां मोक्षविवक्षया अवान्तरफलैः कर्मसु रुचिमुत्पादनमात्रं बहिर्मुखस्य ताव
देह मार्गे प्रवृत्तिर्भवतीति भावः यथा भैषज्ये औषधे रोचनं रुच्युत्पादनं तथा हि पिब निम्बं प्रदास्यामि खलु ते ख
ण्डलड्डुकान् पित्रैवमुक्तः पिबति न फलं तावदेव तु २२ न च कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कुत एवं व्या
ख्यायते यथाश्रुतस्याघटनादित्याह उत्पत्त्येति द्वाभ्यां उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेषु आयु
रिन्द्रियबलवीर्यादिषु स्वजनेषु पुत्रादिषु आत्मनोऽनर्थहेतुषु परिपाकतो दुःखहेतुषु २३ अतस्तान्स्वार्थं परम

फलश्रुतिरियं नृणां न श्रेयो रोचनं परं श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनं
२२ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च आसक्तमनसो मर्त्या आत्मनोऽनर्थ
हेतुषु २३ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि कथं युञ्ज्यात्पुनस्तेषु तां
स्तमो विशतो बुधः २४ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः फलश्रुतिं कु
सुमितां न वेदज्ञा वदन्ति हि २५॥

विदुषः अतो न तान् प्रह्वीभूतान् वेदो यद्बोधयति तदेव
श्रेय इति विश्वसितानित्यर्थः तानेवंभूतान् वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः ततः पुनः
तमः वृक्षादियोनिं विशतः पश्वादिकाम इति आयुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्ते
ष्वेव कामेषु स्वयं बुधो वेदो युञ्ज्यात् प्रवर्तयेत् तथा सत्यनाप्तः स्यादिति भावः २४ कथं तर्हि कर्ममीमांसकाः
फलपरतां वदन्ति वेदस्य तत्राह एवमिति व्यवसितं वेदस्याभिप्रायं कुसुमितां अवान्तरफलप्ररोचनपार
मणीयां परमफलश्रुतिं वदन्ति कुतस्ते कुबुद्धयस्तदाहुः हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदन्ति २५

किंच ते अतिमंदबुद्धय इत्याह स्वप्नोपममिति अमुं परलोकं आशिषः कामानस्मिँल्लोके संकल्प्य तु निश्चित्य वि
घ्नवाहुल्यात् त्यजंति कर्मसु विनियोजयंति यथा कश्चित् वणिक् दुस्तरसमुद्रादिलंघनेन बहुधनार्जनेच्छया
सिद्धं धनं त्यजन्नुभयभ्रष्टो भवति तद्वदित्यर्थः ३० अतो रजःसत्त्वतमोनिष्ठास्ते रजःसत्त्वतमोजुषः स्वा
नुरूपानिंद्रादीनेवोपासते न तु मां यद्यपींद्रादीनामपि मदंशत्वान्मदुपासनमेव तत् तथापि यथावन्नोपासते
भेददृष्टित्वादित्यर्थः ३१ हृदि संकल्प्येत्युक्तं तमेव संकल्पं दर्शयति इष्ट्वेति तस्य भोगस्यांते महाशाला म[illegible]

स्वप्नोपमममुं लोकमसंतं श्रवणप्रियं आशिषो हृदि संकल्प्य त्यजंत्यर्थान्यथा वणिक् ३०
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः उपासत इंद्रमुख्यान्देवादीन्न तथैव माम् ३१ इ
ष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि तस्यांत इह भूयास्म महाशाला महाकुलाः ३२
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणां मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते
३३ वेदा ब्रह्मात्मविषयास्त्रिकांडविषया इमे परोक्षवादा ऋषयः परोक्षं मम च प्रियं ३४

हत्याः ३२ ततः किमित्यत आह एवमिति अतो मत्स्वरूपत्वाभावान्नित्यं संसारिणो भवंतीत्यर्थः ३३ तदेवं प्रवृत्तिप
रत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति वेदा इति कर्मब्रह्मदेवताकांडत्रयविषया इमे वेदाः ब्रह्मात्मविषयाः
ब्रह्मैवात्मा न संसारी न तत्पराः तत्परत्वाप्रतीतौ च फलश्रुतिरियं नृणां न श्रेयो रोचनं परं श्रेयो विवक्षया श्रे
यो यथा भैषज्यरोचनमित्युक्तमेव कारणमनुस्मारयति परोक्षेति ऋषयो मंत्राः तत्र द्रष्टारो वा तत्किमिति
यतः परोक्षमेव मम च प्रियं अयं भावः शुद्धांतःकरणैरेव तद्बोधकं नान्यैरनधिकारिभिः प्रयोजनाकर्मसा
गेन मे प्राप्तसंगादिति ३४॥ रामः

तर

हरि

रामः

ननु वेदज्ञा अपि जैमिन्याद्यः किमिति तथा न वर्णयंतीति चेत् मां विना तत्त्वतो वेदं तदर्थं वा न कोपि वेद
त्याशयेनाह शब्दब्रह्मेति यावत्समाप्ति स्वरूपतोर्थतश्च दुर्विज्ञेयं तत्र स्वरूपं सूक्ष्मं स्थूलं चेति द्विविधं तत्र सूक्ष्मं ता
वत्स्वरूपतोपि दुर्ज्ञेयमित्याह प्राणेंद्रियमनोमयं प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यंत्याख्यं ततः इंद्रिय
मयं मध्यमाख्यं तस्य वाग्व्यंजकत्वेन वागिंद्रियप्रधानत्वात् किंच अनंतपारं समष्टिप्राणादिमयस्य निर्वि
शेषस्य च तस्य कालतो देशतश्चापरिच्छेदात् अर्थतोपि दुर्ज्ञेयत्वमाह गंभीरं निगूढार्थं अतो दुर्विगाह्यं म
तिप्रवेशानर्हं तथा च श्रुतिः चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि।
निहितानि नेंगयंति तुरीयं वाचो मनुष्या वदंतीति अयमर्थः वाचः शब्दब्रह्मणः परिमितानि गणितानि प
द्यते ज्ञायते परं तत्त्वमभिरिति पदानि रूपाणि चत्वारि तानि चत्वार्यपि ये मनीषिणस्त ईदृशः ते विदुर्नान्ये यतो

शब्दब्रह्म सुदुर्बोधं प्राणेंद्रियमनोमयं अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत् ३५ म
योपबृंहितं भूम्ना ब्रह्मणानंतशक्तिना भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ३६

गुहायां देहमध्ये त्रीणि निहितानि नेंगयंति स्वरूपेण प्रकाशयंति अतः केवलं वाचः तुरीयं चतुर्थं भागं वै
खरीरूपं मनुष्याः प्राणिनो वदंति तमपि वदंत्येव न तु तत्त्वतो जानंति ३५ तत्र मनीषिभिरवज्ञेयं सूक्ष्मरूपं द
र्शयति मयेति मयांतर्यामिणा उपबृंहितमधिष्ठितं अतस्तस्यापरिच्छेदमाह भूम्नेति अधिष्ठातृत्वेप्यविका
रित्वमाह ब्रह्मणेति अविकृतस्यापि नियंतृत्वं घटयति अनंतशक्तिना भूतेषु सर्वप्राणिषु घोषरूपेण
नादरूपेण लक्ष्यते मनीषिभिः अतः सूक्ष्मत्वेन दर्शने दृष्टांतः बिसेषूर्णा तंतुरिवेति ३६ ॥ रामः

ततो वैखर्याख्यां वाचं हत्वा वाच उत्पत्तिप्रकारं सदृष्टान्तमाह यथेति त्रिभिः हृदयात् सकाशात् मुखात् मुखद्वारात् उद्गमते वहिः प्रकटयति दार्ष्टान्तिके दर्शयति आकाशादिति प्राणः तदुपाधिर्हिरण्यगर्भरूपः प्रभुः। भगवान् तेन रूपेण छन्दोमयो वेदमूर्तिः अमृतमयः घोषवान् नादोपासनवान् मनसा निमित्तभूतेन निमित्तमेव दर्शयति स्पर्शादीन् वर्णान् रूपयति संकल्पयतीति स्पर्शरूपिणा तेन स्पर्शग्रहणमुपलक्षणं हृदयाकाशाद् बृहतीं सृजतीति तृतीयश्लोकेनान्वयः बृहतीं शाखोपशाखाख्यानाय विशेषणानि

यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ३७ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ओंकाराद्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषितां ३८ विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयं ३९ गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिज

हस्रपदवीं बहुमार्गां तदेवाह ओंकारात् उरःकण्ठादिसंयोगेन व्यञ्जितैः स्पर्शादिभिर्भूषितां ओंकारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतः न त्वकारादिवर्णरूपः तस्य व्यञ्जकत्वात् तत्र स्पर्शाः कादिपञ्चवर्गाः स्वरा अकारादयः षोडश ऊष्माणः शषसहाः अन्तस्था यरलवाः ३८ विचित्राभिर्लौकिकवैदिकभाषाभिर्विततां यथोत्तरं चत्वार्यक्षराणि अधिकानि येषु तैः छन्दोभिरुपलक्षितां एवमनन्तपारां सृजति स्वयमेवाक्षिपते उपसंहरति च ३९ तदुक्तानि छन्दांसि दर्शयति गायत्रीति तत्र चतुर्विंशत्यक्षरा गायत्री ततश्चतुरुत्तराक्षरा उष्णिगादि छन्दांसि अत्यष्टिः अतिजगती अतिविराडित्यर्थः एतैः छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेयेत्युक्तं ४० ॥ रामः ॥ रामः

अर्पितोपि दुर्ज्ञेयत्वमाह किमिति कर्मकांडे विधिवाक्यैः किं विधत्ते देवताकांडे मंत्रवाक्यैः किमाचष्टे
ज्ञाकाशापति ज्ञानकांडे च किमनूद्य विकल्पयेत् निषेधार्थमित्येवमस्या हृदयं तात्पर्यं मत्तोन्यः कश्चि
दपि न वेद ४१ ननु तर्हि त्वमेव कथय कथयामीति कथयति मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवता
रूपमभिधत्ते न मत्तः पृथक् यच्चाकाशादि प्रपंचजातं तस्मादात्मन आकाशः संभूत इत्यादिना विक
ल्प्यापोह्यते मेवं न मत्तः पृथगस्ति कुत इत्यपेक्षायां सर्ववेदार्थसंक्षेपतः कथयति एतावानेव सर्वेषां वेदा
नामर्थः तमेवाह शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य नेनाह नास्ति किंचने

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् इत्यस्या हृदयं लोके नान्यो मद्वेद कश्च
न ४१ मां विधत्तेभिधत्ते मां विकल्प्यापोह्यते त्वहं एतावान्सर्ववेदार्थः शब्द आस्था
य मां भिदां मायामात्रमनूद्यांते प्रतिषिध्य प्रसीदति ४२ इति श्रीभा० ए० धे० एका
विंशोध्यायः २१ उद्धव उवाच कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो नवैका
दश पंच त्रीण्यात्थ त्वमिति शुश्रुम १॥

तिप्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति अयं भा
वः यथान्यपुरे योरसः स एव तद्विस्तारभूतनानाकांडशाखास्वपि तथैव प्रणवस्य योर्थः परमेश्वरः स एव
तद्विस्तारभूतानां सर्ववेदकांडशाखानामपि तथैव प्रणवस्य योर्थः परमेश्वरः स एव तद्विस्तारभूतानां स
र्ववेदकांडशाखानामपि संक्षेपतेनान्य इति नित्यमुक्तः स्वतः सर्ववेदक[illegible]सर्ववेदवित् स्वपरज्ञानदाता
यस्तं वंदे गुरुमीश्वरं ४२ इत्येकादशे एकविंशः २१ द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ७ प्रक्रसो
विवेकश्च जन्मम्रसुविधोदिच १ तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वे निर्णीते सति च मोक्षप
रत्वेपि तदंतरविवादाः तथाहि केचित्तत्त्वसंख्यासु विवदंते तत्रापि च वाक्यार्थसदसत्त्वे आत्मतत्त्वेष्व

एतावत्तां नानात्वमेतावत्त्वं नानात्वमित्यर्थः। यद्विवक्षया यत्प्रयोजनमभिप्रेत्य गायन्तीति आयुष्मन्नित्यसमर्हे इ
विवक्षाभेदेन सर्वं युक्तमेवमायायाश्च किं नाम न युक्तमित्याह युक्तमिति यथा ब्राह्मणा भाषन्ते तद्युक्तं न च वस्तुतः
यस्मात्सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्त्वानि किं च मायामिति अस्मत्त्वेपि मायाश्रयत्वात् घटत एवेत्यर्थः ४
ध्येयस्वीकृतमनहिमरीचिजलपारमार्थ्यादिविवादे किं वैरं घटितमिव भवति ४ ननु यदि सर्वमपि युक्तं कुतो वि
वादः यदि च मायैवावलम्बनं कुतो हेतुप्रतिविवादः तत्राह नैतदिति द्वाभ्यां एतच्च विवदमानानां मदीयाः दुरत्ययाः शक्

केचित्षड्विंशतिं प्राहुरपरे पंचविंशतिं सप्तैके नव षट् केचिच्चत्वार्येकादशापरे २ के
चित्सप्तदश प्राहुः षोडशैके त्रयोदश एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ३ गा
यन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि श्रीभगवानुवाच युक्तं च सन्ति सर्वत्र भाषन्ते ब्रा
ह्मणा यथा मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटं ४ नैतदेवं यथात्थ त्वं यदहं व
च्मि तत्तथा एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ५ यासां व्यतिकरादासीद्विकल्पो
वदतां पदं प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ६ परस्परानुप्रवेशात्तत्त्वानां पुरु
षर्षभ पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितं ७ ॥ सत्त्वाद्या अन्तःकरणवृत्ति
विशेषरूपेण परिणताः एव हेतुरित्यर्थः ५ तासां विवादहेतुत्वमुपपादयति यासां व्यतिकरात्क्षोभात् वद
तां पदं विषयः विकल्पो भेद आसीत् अन्तःकरणवृत्तिविकल्पावान्तरभेदतः एतदेव व्यतिरेकेणाह प्राप्ते इति शम
दमयोर्हेतुकं तस्मिन्प्राप्ते विकल्पोऽप्येति लीयते तं च विकल्पनाशमनु वादः शाम्यतीति ६ सन्ति सर्वत्रेति य
दुक्तं तत्प्रपंचयति परस्परेति द्वाभ्यां अन्योन्यस्मिन्ननुप्रवेशात् वक्तुर्यथा विवक्षितं तथा पूर्वकारणस्य
परकार्यकार्यकारणभावेन प्रसंख्यानं भवति यद्वा पूर्वोक्तस्य संख्यानं परोक्तस्याधिकसंख्यानयोर्भावः यो

अत्र प्रवेशं दर्शयति एकस्मिन्नपीति पूर्वस्मिन्कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घट
वत् अपरस्मिन्कार्ये तत्त्वे कारणतत्त्वान्यनुगतत्वेन प्रविष्टानि घटे मृद्वत् ८ अविरोधमुपसंहरति अतः
अमीषां तत्त्वानां पौर्वापर्यं कारणकार्यत्वं अतस्तत्संख्यानं च न्यूनाधिकमभीप्सितं वादिनो मध्ये यथायथा विवि
क्तं यद्वक्त्रं यस्य मुखं प्रवर्तते तेन तत्सर्वं विविक्तं भिन्नभिन्नं तं वयं गृह्णीमः उपायेन सर्वत्र युक्तेः संभवात् ९ न।
तु कार्यकारणतत्त्वानां पञ्चपञ्चकोपञ्चकविवक्षया भवतु नाम संख्याभेदः जीवेश्वरयोस्तु कथं भेदाभेदवि।

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च पूर्वस्मिन्वापरस्मिन्वा तत्त्वे तत्त्वानि सर्व
शः ८ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सतां यथाविविक्तं यद्वक्त्रं गृह्णीमो युक्ति
संभवात् ९ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनं स्वतो न संभवादन्यस्तत्त्वज्ञो।
ज्ञानदो भवेत् १० पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि तदन्यकल्पनापार्था ज्ञानं च

वक्तव्या षड्विंशतिपञ्चविंशतिपक्षौ प्रकटौ अत आह अनादीति स्वतो न संभवति अन्यतस्तु संभवात्
स्वतः सर्वज्ञेन परमेश्वरेणान्येन भवितव्यमिति षड्विंशतिपक्षाभिप्रायः स्पष्टः १० कथं तर्हि पंच
विंशतिपक्षः तत्राह पुरुषेति वैलक्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वात् अतस्तयोरन्यत
मन्यत्कल्पना अपार्था व्यर्था एवं पंचविंशतिपक्षः प्रकटितः स्पष्टः नन्वेवमपीश्वरप्रसादलभ्यज्ञा
नस्य पञ्चकात्मकत्वहेतुमपि न घटते अत आह ज्ञानं चेति सत्त्वगुणवृत्तित्वात्तदन्तर्भूतमित्यर्थः ११॥

ननु ज्ञानं जीवधर्मः कथं प्रकृतेर्गुणः स्यात् अत आह प्रकृतिरिति गुणसाम्यं हि प्रकृतिः अतस्तद्विशेषरूपा गुणास्तस्या एव न त्वात्मनो जीवस्याकर्तृत्वात् स्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः १२ अतः सत्वं सत्वमयं ज्ञानं प्रकृतेर्गुण इति पूर्वेणैव संबंधः ननु तर्हि निवृत्तं कर्म चाज्ञानं च तत्वांतरं स्यात् नेत्याह रजः कर्म रजसो वृत्तिः अज्ञानं च तमसः अतः कर्माज्ञानयो रजस्तमोद्वारा प्रकृतावेवान्तर्भाव इति भावः तथापि कालस्वभावयोस्तत्वान्तरता स्यात् न गुणानां व्यतिकरो यस्मात् स ईश्वर एव कालो नाम स्वभावो नाम सूत्रं महत्तत्वमेव तस्य सर्वशक्तिमत्वात् तदेवं ज्ञानादीनां यथायथमंतर्भावान्न पक्षद्वयेपि तत्वव

प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः सत्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः १२
सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते गुणव्यतिकरः कालः स्वभावः सूत्रमेव
च १३ पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ज्योतिरापः क्षितिरिति तत्वान्यु।
क्तानि मे नव १४ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः वाक्पाण्युपस्थपा
य्वंघ्रिः कर्माण्यंगोभयं मनः १५॥

टी: एतच्च पक्षांतरेष्वपि ज्ञेयं समत्वेन गुणानां मायामयत्वात् प्रकृतेर्भेदो विवक्षितः अतो गुणास्त्रीणि तत्वानि अपराणि पंचविंशति तत्वानि १३ पूर्वोक्तपक्षद्वयसाधारण्यं निदर्शयति पुरुष इति सार्द्धाभ्यां व्यक्तं महत्तत्वं नभआदीनि पंचतन्मात्राणि मे मया १४ एकादशेंद्रियाण्याह श्रोत्रमिति दर्शनं चक्षुः ज्ञानशक्तयः ज्ञानेंद्रियाणि पंच वागादिपाय्वंतानि द्वंद्वैकवत्त्वेनोक्तानि चत्वारि अंघ्रिश्चेति कर्मेंद्रियाणि पंच उभयं मनुभयात्मकं मनः अंग हे उद्धव एवमेतान्येकादश १५ ॥ ॥

पंचदशं दर्शयति शब्द इति शब्दादीनि विषयतया परिणतानि पंचमहाभूतानि तनुगत्यादिभिः सत्वाधिकं पदद्वये
पि स्यान्नेत्याह गतीति गतिश्च उक्तिश्च उत्सर्गौ च शिल्पं च तानि कर्मायतनानां कर्मेंद्रियाणां सिद्धयः फलानि
न तत्वांतराणीत्यर्थः १६ तदेवमनंतत्रयेण तत्वसंख्याभेदं निरूप्य षड्विंशत्यागमेनेति यत्तु षट् तत्तन्मतनात्पर्यं दर्शी
यति सर्गादाविति कार्याणां षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती प्रकृतिः अस्य विश्वस्य
सर्गादौ गुणाः सज्यत्वाद्यवस्थाधृतेउपादानकारणरूपत्वात् पुरुषस्तु अव्यक्तः अपरिणामी निमित्तभूतः के

शब्दः स्पर्शो रसो गंधो रूपं चेत्यर्थजातयः गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः
१६ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी सत्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्ष
ते १७ व्यक्ताद्यो विकुर्वाणा धातवः पूरुषेक्षया लब्धवीर्याः सृजंत्यंडं संहताः प्रकृते
र्बलात् १८ सप्तैव धातव इति तत्रार्थाः पंच खादयः ज्ञानमात्मोभयाधारस्ततो देहेंद्रिया
सवः १९ षडित्यत्रापि भूतानि पंच षष्ठः परः पुमान् तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत्

वलमीक्षते अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति १७ तत्वैरारब्धस्य कार्यस्य तदंतर्भावमभिप्रेत्याह ।
व्यक्तादय इति महदादयः प्रकृतेरव्यक्तायाः धातवस्ते विकुर्वाणाः पुरुषेक्षया लब्धवीर्याः संहताः अंडं सृजंति
प्रकृतेर्बलात् तामाश्रित्येत्यर्थः १८ एवं स्वमतमुपसंहृत्य मतांतरेष्वपि सामान्यतो निरूपितं घटनाविशे
षतः सतात्पर्यं दर्शयति सप्तैवेति ज्ञानं जानातीति द्रष्टा जीवः उभयोर्द्रष्टृदृश्ययोराधार आत्मा चेति स
प्त तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वंतर्भावः उत्तरेषामंतर्भावार्थमाह ततः तेभ्यः सप्तभ्यः १९ ष
डितिमतेपि भौतिकस्य भूतांतर्भावं जीवस्य च परमात्मांतर्भावमाह तैर्युक्त इति २० ॥ रामः ॥॥

अन्नं पृथिवी आत्मनो जातानि आत्मना सह चत्वारि तत्वानि अंतर्भावयंत्याह तैरिति अवयविनः।
कार्यस्य २१ भूतानि च मात्राणि च इंद्रियाणि च पंच पंच एके न मनसा सह आत्मा सप्तदशः २२ आत्मैव
संकल्पयन् मन उच्यते त्रयोदशपक्षे पंच भूतानि पंचेंद्रियाणि भूतानि तन्मात्रैरेकीकृतानि एवं चेंद्रि-
याणि च तत्प्रकाशकानि पंचैव मन एकमिंद्रियाधिष्ठानं आत्मा च द्विविधः एवं त्रयोदश पंचविंशति
पक्षे महदादयोष्टौ पंच खादयः एकादशेंद्रियाणि आत्मा चेति षड्विंशति पक्षे कालः परमो वा अधिकः ।

चत्वार्येवेति तत्रापि तेज आपोन्नमात्मनः जातानि तैरिदं जातं जन्मावयविनः खलु २१
संख्याने सप्तदशके भूतमात्रेंद्रियाणि च पंच पंचैकमनसा आत्मा सप्तदशः स्मृतः २२
तद्वत्षोडशसंख्याने आत्मैव मन उच्यते भूतेंद्रियाणि पंचैव मन आत्मा त्रयोदश एका-
दशत्व आत्मासौ महाभूतेंद्रियाणि च अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ २३ इ-
ति नानाप्रसंख्यानं तत्वानामृषिभिः कृतं सर्वं न्याय्यं युक्तिमत्वाद्विदुषां किमशोभनं
२४ उद्धव उवाच प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ अन्योन्यापाश्रयात्
कृष्ण दृश्यते न भिदा तयोः २५ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि एवं मे पुंडरीका-
क्ष महांतं संशयं हृदि छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः २६॥

कादशपक्षे पंच भूतानि पंचेंद्रियाणि
णि जीवमनसोरात्मन्यंतर्भावेनैतान्येवैकादश नवपक्षे अष्ट प्रकृतयः षोडशविकाराणामंतर्भावः २३ उपसंहरति
इतीति इत्येभिः प्रकारैः प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः २४ तत्र पृच्छति प्रकृतिरिति आत्मना जडाजडस्वभा-
वेन विलक्षणौ अन्योन्यापाश्रयात् परस्परपरिहारेणाप्रतीतेरित्यर्थः २५ तदेव व्यनक्ति प्रकृतौ तत्कार्ये दे-

अर्हसीत्युक्तं तत्र हेतुमाह हि यस्मात्त्वत्तः त्वत्प्रसादादेव ज्ञं अत्र ज्ञाने प्रमोषः अंशशक्ते ते शक्तितः मायातः ननु।
स्वप्रकाशस्यात्मनः कथं ज्ञानप्रमोषः ज्ञानदानेन तत्प्रमोषे वा मम किं प्रयोजनं अत आह त्वमेवेति २७ विकारा।
विकाराभ्यां नानात्वैकत्वाभ्यां सापेक्षनिरपेक्षप्रकाशाभ्यां वा त्वं तमेवं वक्तुमाह प्रकृतिः पुरुषश्चेति विक
ल्पोऽयं भेद एव कुतः स्वपेक्षायां प्रकृतिशब्दोपात्तस्य देहादिसंघातस्य विकारित्वेनावहृश्यमति एष इति

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः
२७ श्रीभगवानुवाच प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ एष वैकारिकः स।
र्गो गुणव्यतिकरात्मकः २८ ममांग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विध
त्ते वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् २९ ॥दृग्रूपमा।
र्कं वपुरत्र रंध्रे परस्परं सिध्यति यः स्वतः खे ॥ द्वाभ्यां एष कार्यभेदः स ज्ञात इति सर्गो देहादिसंघातः वैकारि
कः विकारवान् अत्र हेतुः गुणव्यतिकरात्मकः गुणक्षोभकृतः २८ नानात्वमाह ममेति विकल्पभेदं तद्बुद्धीश्च अने
कधात्वं प्रपंचयति वैकारिकः अनेकविकारवानपि स्फूलेन मार्गेण तावत्त्रिविधः त्रैविध्यमेवाह अध्यात्ममिति ए
करूपं २९ तानि रूपाण्युदाहरति दृक् अध्यात्मरूपं अधिभूतं अत्र रंध्रे च चक्षुर्गोलके प्रविष्टं आर्कं वपुः अंशोऽधि
दैवमिति सापेक्षप्रकाशतामाह परस्परमिति चक्षुषा रूपं तत्प्रकाशं तेन दर्शनानुपपत्त्या चक्षुः तत्प्रकाशसम्बन्धानुपपत्त्या
तदधिष्ठात्री देवता तत्संचक्षुषः प्रवृत्तिः ततो रूपज्ञानमित्येवमेतत्त्रयं परस्परं सिध्यति अत्र रंध्र इति विशेषणा
त्सावयत्वमाह दृष्टान्तोपयोगितया पदं तु खे आकाशे अर्को वर्तते मंडलात्मा स तु स्वतः सिध्यति च चक्षुर्विषयत्वेपि
प्रतियोग्यपेक्षाभावमात्रेण स्वतः इत्युक्तं इदानीं आत्मनो विकारित्वाद्यभावेन भेदमाह यत् यस्मात् ॥

आत्मा एषामध्यात्मादीनामाद्यः कारणं अत एकरूपः अभिन्नः अतस्मादेभ्यः परो भिन्नः स्वप्रकाशत्वा
द्यौत्याह स्वयानुभूत्या स्वतःसिद्धप्रकाशेन अखिलानां सिद्धीनां परस्पर प्रकाशकानामपि प्रकाशकः
सर्वेषामपि सामान्यतस्तत्प्रकाशविषयत्वात् अत एव तस्य स्वप्रकाशत्वं सिद्धं ३० चक्षुषि दर्शितं त्रै।
विध्यमिंद्रियांतरे व्यपदिशति एवमिति यथा चक्षुः एवं त्वगाद्यपीत्यर्थः त्वक् स्पर्शो वायुरिति श्रवणं श
ब्दो दिश इति जिह्वा रसो वरुण इति नासा गंधो अश्विनाविति चित्तेनयुक्तं मनः करणं तत्र मनत्र चित्तं चेतयितव्यं
वासुदेव इति मनो मंतव्यं चंद्र इति बुद्धिर्बोधव्यं ब्रह्मेति अहंकारो हंकर्तव्यं रुद्र इत्येवं त्रिविधमित्यर्थः ननु पुनर

आत्मा परेषामपरो यमाद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः ३० एवं त्वगादि श्रवणा
दि चक्षुर्जिह्वादिनासादि च चित्तयुक्तं यो सौ गुणक्षोभकृतो विकारः प्रधानमूलान्मह।
तः प्रसूतः ३१ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐंद्रियश्च आत्माप
रिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ३२ ॥

यद्वैतत्स्वमात्रमेवोक्तं त्रिविधत्र
पंचव्यतिरिक्तात्मप्राप्तिस्तु कुतः स्यात् अहंकारनिष्ठत्वात्तत्त्वं तत्त्रिविधविकल्पनिष्ठत्वेवेत्याशयेनाह यो सौ अ
हं अहंकारः तमेवाह गुणक्षोभं करोतीति तथा नतः परमेश्वरात्कालादृष्टनिमित्तात् प्रधानमूलमुपादानं यस्य
तस्मात् महतः प्रसूतो विकारः ३१ स त्रिवृत् त्रिविधः मोहमयस्य विकल्पस्य हेतुः त्रिवृत्त्वमेवाह वैकारिक
इति स कुतो निवर्तते आत्माज्ञानविलसितत्वात् तत्ज्ञानेन त्वाशयेनाह आत्मापरिज्ञानमय इति ननु कथं
मोहमयत्वं विकल्पस्याहंकारस्य वा केन लक्षणेन योगीकारात् तत्राह विवाद इति ननु कथं अयं भिदार्थनि
ष्ठो विवादो ह्यात्मापरिज्ञानमय इत्यन्वयः यद्वा विवादः सर्वोपि भिदार्थनिष्ठ एव न तु वस्तुमात्रनिष्ठः अतः प

ननुयद्यहंकार एवैकस्य जन्मास्ति अलं तर्हि तन्निवृत्तिप्रायश्चित्तेन तत्राह अर्थेपि अर्थैरहितोपि स्वरूपभूतानां
तोवहिर्मुखानां नैवोपरमेत् प्रत्युत तत्कृतैः कर्मभिरुच्चनीचदेहेषु तेसंसरतीति तत्र अपावृत्ति त्वत्त इति व्यापकस्या
त्मनोदेहाद्देहांतरगमने अकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ३२ एतद्धि द्रष्टुं सोन शक्नोति हि
यस्मात् मायया वंचिताः मोहिताः ३४ लिंगशरीराध्यासेन सर्वं घटत इत्युत्तरमाह मन इति प्रधानत्वेन यं चभिरि।
तिनिर्देशो येषाम प्युपलक्षणार्थः देहाद्देहांतरं प्रतियाति ततोन्य एवात्मा तन्मनोनुवर्तते अहंकारेणानुगच्छति

अर्थेपि नैवोपरमेत पुंसां मतः पराङ्गतियोस्ति लोकात् ३२ उद्धवउवाच त्वत्तः परावृत्तधियः
स्वकृतैः कर्मभिः प्रभो उच्चावचान्यथा देहान् गृह्णंति विसृजंति च ३३ तन्ममाख्याहि गो
विंद दुर्विभाव्यमनात्मभिः नह्येतत्प्रायशो लोके विद्वांसः संति वंचिताः ३४ श्रीभगवानु
वाच मनः कर्ममयं नृणामिंद्रियैः पंचभिर्युतं लोकाल्लोकं प्रयाति अन्य आत्मा तदनुव
र्तते ३५ ध्यायन्मनो विषयान् दृष्टान्वानुश्रुतानथ उद्यत्सीदत्कर्मतंत्रं स्मृतिस्तदनु
शाम्यति ३६ विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंत।

३५ मनसोपि पूर्वदेहवियोगो देहांतरयोगश्च कथं भवतीति चेत् स्मृतिवियोगयोगाभ्यामिति वक्तुं तयोः कारणमा
ह ध्यायदिति कर्मतंत्रं त्वात्कर्मोपस्थापितान् दृष्टान्वा अनुश्रुतान् वैदिकान्वा विषयान् अनुध्यायत् अथ अनं
तरं ध्यायमाने षूद्यत् आविर्भवत् पूर्वविषयेषु च सीदत् लीयमाने भवति तदनंतरं तस्य स्मृतिः पूर्वापरानुसंधानं
नश्यति ३६ ततः किमत आह विषयेति कर्मोपस्थापितदेवादिदेहस्य संताभिनिवेशेनात्मानं पूर्वदेहं उतमनो नस्मरेदि
ति यत्तसैव यातनादेहाभिनिवेशेन भयशोकादेः देवादिदेहाभिनिवेशेन वा हर्षतर्षादेर्हेतोः पूर्वदेहे अत्यंतविस्मृ।
तिः अहंकारनिवृत्तिलक्षणाभिमानिनो जंतोर्जीवस्य मृत्युरुच्यते न तु देहवन्नाशः ३७ ॥ ॥

जन्मत्वविषयस्य देहस्य आत्मतयास्योक्तिं अभिमानं प्राहुः ननु देहवद्दृश्यतिं न च पुत्रादि देहवत्त्रीत्यतिशायमा
त्रेणा किंतु सर्वभावेन अभेदेन अभिमानमात्रेणोत्पत्तिमरणे दृष्टांतः द्वयं यथास्व मम मनोरथेऽप्युत्सर्थः ७८
दृष्टांतो विवृणोति स्वभ्रमिति तत्र वर्तमाने स्वभ्रमोद्देशे एवं चेति अपूर्वमिवेति चान्वयः एवं सिद्धम् यथात्मानमप्ये
वंमिव अत्र ह्यजातमिव पश्यतीत्यर्थः ७९ उपसंहरति इंद्रियाणामायतनं मनः तस्य देहस्य तत्रागिनिवेशनया स्ट.त्रिःउ
त्पत्तिः तथा वस्तुनि आत्मनि तदभिमाने नेंद्रे त्रैविध्ये उत्तममध्यमनीचत्वे अस्य देवभातीत्यन्वयः एवम्भूत आत्मा

जन्मत्वात्मनयाऽऽत्मनः सर्वभावेन सरिद विषयस्योक्तिं प्राहुर्यथास्व ममनोरथः ७८ =
स्वभ्रममनोरथं चेष्टन् प्राक्तनेन स्मरत्यसौ तत्र एवमिवात्मानमप्येवं चानुपश्यति ७९
इंद्रियायतनस्यास्य देहे त्रैविध्यभाति वस्तुनि बहिरंतमिदा हेतुर्जनो सज्जनकस्य यथा ८०
नित्यदात्यंगभूतानि भवंति न भवंति च कालेनाल्पस्य वेगेन सूक्ष्मत्वान्न दृश्यते

वात्याभ्यंतरभेदहेतुश्च भवति बाह्यविषयान् सुखादीन्नपश्यतीत्यर्थः यथा जनो जीवः स्वप्नेव हूनसतोज
मान्देहान्कुर्वन्पश्यन्बहुरूपो भाति तद्वत् यदा इंद्रे त्रैविध्ये अध्यात्मादिरूपं भाति अस्य सज्जनकं तद्दुष्टपु
त्रीत्यादिकं जनः पितास्वयं समोऽपि पुत्राभिमानस्तदरिमित्रादिषु यथा भेदहेतुर्भवति तद्वदिति अन्यत्समानं
८० नदेवं लोकप्रसिद्धो जन्ममरणं निरूप्य सूक्ष्मत्वात् पश्चावयितौ वैराग्याय निरूपयति नित्यदा प्रतिक्षणं
भूतानि शरीराणि उत्पद्यंते नश्यंति च कालस्यातिसूक्ष्मत्वात्तत्कृतभवनमभवनं चाविवेकिभिर्नल
क्ष्यते ८१ ॥ रामः

॥

रामः ॥

सतोजन्ममरणयोरज्ञानैककारणमेतदुक्तैवेतत्त्वमेवतयोःकुतःइत्याशंक्यानुमानेनसाधयति अर्चिषामपरि
णामादिभिःस्रोतसांगत्यादिभिःफलानांरूपादिभिर्यथावस्थाविशेषाःकृताःकालेनेतिपूर्वस्यानुषंगः।
आदिशब्देनतेजोबलकामकौशलादीनामुपादानंविमतंप्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्त्वा
त्दीपज्वालादिवदित्यनुमानं ४२ कथंतर्हिप्रत्यभिज्ञानंतदेवसादृश्यावलम्बिनीत्याहसोयमितिसादृश्याद
र्चिषामेवयथासोयंदीपप्रत्यभिज्ञायथाचस्रोतसांप्रवाहजलानांतदिदंजलंइतितथासोयंपुमानितिधी।

यथार्चिषांस्रोतसांचफलानांवावनस्पतेः तथैवसर्वभूतानांवयोवस्थादयःकृ
ताः ४२ सोयंदीपोर्चिषांयद्वत्स्रोतसांतदिदंजलं सोयंपुमानितिनृणांमृषागीर्धी
र्मृषायुषां ४३ मास्वस्यकर्मबीजेनजायतेसोप्ययंपुमान् म्रियतेवामरोभ्रान्त्याय
थाग्निर्दारुसंयुतः ४४ निषेकगर्भजन्मानिबाल्यकौमारयौवनं वयोमध्यंजरामृत्यु
रित्यवस्थास्तनोर्नव ४५॥

सोयंमृषान्नृणांबहूनांशरीरिणांमृषाअयथार्थमायुर्येषामविवेकिनां
तेषांभवति ४२ ननुकथंदेहाध्यासवतःपुंसःकर्मजन्ममरणानिसंततिनाम्यस्येतिअवस्थानहिघटेनघट।
स्यगुरुधर्मेदेनसत्त्वमसत्त्वंचेतिन अज्ञस्यापिवस्तुतःतदभावादित्याहमास्वस्येनेवात्मनःकर्मणाबीजभूते
नसोपिअन्योपिपुमानज्ञायतेम्रियतेचकिंचअयंभ्रान्त्याअजन्मापिजायतइवअमरोपिम्रियतइवयथाम
हाभूततेजोरूपोग्निराकल्पांतमवस्थितोपिदारुयोगवियोगाभ्यांजन्मनाशौप्राप्नोतितद्वत् ४४ स्थिरु
वत्कृतोक्तावयोवस्थाःप्रपंचयतिनिषेकोजठरेप्रवेशःगर्भस्तन्मध्येवृद्धिःबाल्यमापंचमात्कौमारं।
आषोडशाद्वर्षात्ततोयौवनंआपंचचत्वारिंशतःततोवयोमध्यमाषष्टिवर्षात्तदुपरिजरातदुपरिमृत्युः ४५

देहसंबंधाज्जन्ममरणादिनीत्युपपादितमर्थमुपसंहरति एतामिति हि स्फुटं अन्यस्य देहस्य तनुः अवस्था गुण-
संगात् प्रकृत्यविवेकात् कश्चित्परमेश्वरानुगृहीतः कदाचित् जहाति अवस्थावतो देहस्य द्रष्टा नावस्थावा-
निति विवेकज्ञानेन ४६ ननु तदानीं मूर्छितत्वेन जन्ममरणवान्देहो न दृश्यते तत्राह आत्मन इति पितृदेह-
स्यौर्ध्वदेहिकं कुर्वताप्ययदर्शनात् पुत्रदेहस्य च जातकर्मणि जन्मदर्शनादात्मनः स्वदेहस्यापि भवाप्ययावनु-
मेयौ एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणः भवाप्ययधर्मको न भवति ४७

एतां मनोरथमयीं हान्यस्योच्चावचां तनुं । गुणसंगादुपादत्ते क्वचित्क्वचिज्जहाति च ॥
४६ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ । न भवाप्ययवस्तूनामभिज्ञो द्वयलक्ष-
णः ४७ तरोर्बीजविपाकाभ्यां यो विद्वाञ्जन्मसंयमौ । तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः
पृथक् ४८ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् । तत्वेन स्पर्शसंमूढः संसारं प्रतिप-
द्यते ४९ सत्वसंगादृषीन्देवान्रजसासुरमानुषान् । तमसा भूततिर्यक्त्वं भ्रामितो याति
कर्मभिः ५० नृत्यतो गायतः पश्यन्यथैवानुकरोति तान् । एवं बुद्धिगुणान्पश्यन्ननीहोऽपि

एतदेव दृष्टान्तेन स्पष्टयति तरोरिति तरुशब्देनोद्भिज्जमात्रस्योपलक्षणं फलपाकान्तस्य व्रीह्यादेरित्यर्थः । यद्वा तरो-
रेवांशतः परिणामो विपाकः बीजाज्जन्म विपाकात्संयमनाशं च यो विद्वान् तरसाक्षी स तरोर्विलक्षणो द्रष्टा एवं तनोर्द्र-
ष्टा तनुतः पृथक् ४८ अविवेकिनः संसारं प्रपञ्चयति प्रकृतेरिति पञ्चभिः तत्वेन तत्वतोऽविविच्य तत्र दृष्टा स्पर्शो
विषयसंगस्तेन मूढः सन् ४९ गुणभेदेन त्रिविधं तत्रापि तारतम्येनानेककर्त्रादिविधं संसारमाह सत्वेति ५० ननु
कर्तुरात्मनः कुतः कर्मभिर्भ्रमणं तत्राह नृत्यतो गायतो जनान्पश्यन् अनुकरोति तद्वत् स्वरतालादिगतिश्च ।

राम

उपाधेरथर्मानुपहितः एवमासेत इत्यत्र दृष्टान्तमाह यथांभसेति तीरस्थास्तरवो धावंत एव यथा दृश्यन्ते जले प्रतिबिंबि
ता वा चंचलाः एवं तिविषयग्राहकेशमनसा परिकल्पिता एवं तेषु विषयेषु लावण्यादयो गुणाः न वस्तुतः संतीत्यर्थः।
नोनिवंधन एवं संसारः स्यामिन्नस्तु संगात्र किं गुणाग्राह्येव मासेत इत्यत्र दृष्टान्तमाह चक्षुषेति ५२ भोगस्यापि मिथ्यात्वे
दृष्टान्तद्वयमाह यथेति यथा एता मनोरथधियः स्वप्नदृष्टाश्च विषयाः यथा मृषा एवमात्मनो विषयानुभवः
संसारो मृषा ५३ ननु यदि मृषा तर्हि तन्निवृत्तिः कस्मान्नेत्यत आह अर्थ इति अस्य आत्मनः ५४ अतो भोगोद्यमो न।

यथांभसा प्रचलता तरवोपि चला इव चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ५२
यथा मनोरथधियो विषयानुभवो मृषा स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ५३
अर्थे ह्यविद्यमानेपि संसृतिर्न निवर्तते ध्यायतो विषयानस्य स्वप्नेनर्थागमो यथा ५४ =
तस्मादुद्धव मा भुंक्ष्व विषयानसदिंद्रियैः आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमं ५५
क्षिप्तोवमानितोसद्भिः प्रलब्धोसूयितोथवा ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ५६
निष्ठ्युतो मूत्रितो वाज्ञैर्बहुधैवं प्रकंपितः श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत्
५७ उद्धव उवाच यथैवमनुबुध्येयं वद नो वदतां वर सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमं।

कर्तव्य इत्याह तस्मादिति ५५ दुःखप्रतीकारोद्यममपि परित्यज्य परमेश्वरनिष्ठेनैव भाव्यमित्याह क्षिप्त इति क्षि
प्तो निर्भर्त्सितः असद्भिः पुरुषैः तिरस्कृतः प्रलब्धः उपहसितः ५६ निष्ठ्युतः निष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृ
तः प्रकंपितः परमेश्वरनिष्ठातः प्रच्यावितोपि कृच्छ्रगतः कष्टं प्राप्तोपि ५७ एवं तदुक्तं यथावदनुबुध्येयं त
था नः सर्वान्प्रतिवद ५८ ॥ राम: राम: राम:

त्वद्धर्मनिरतान्ते विदुषामपि असद्भिः कृतमतिक्रमं अपराधं सोढुं सहंमन्यइत्यन्वयः प्रकृतिः स्वभावः ॥ नि
रस्य सर्व्वसंदेहानेकादशस्कन्धस्य दर्शनप्रकाशितरहस्यं तं भजामि गुरुमीश्वरं ५९ इत्येकादशे द्वाविंशः २२ त्र
योविंशे तिरस्कारसहनोपाय ईर्यते भिक्षुगीतप्रकारेण मनसः संयमो धिया १ दुर्जनोपद्रवान्नेडुः सहेऽपि
महीयसः अतश्चतुर्भिरध्यायैः सहनोपाय वर्ण्यते २ तत्रतावदस्मिन्नध्याये भिक्षुगीतया मनोविजयः उत्तर
स्मिन्सांख्ये नित्यविवेकः तदुत्तरस्मिन्गुणवृत्तिविजयः ततः परस्मिन्नैलगीतया विषयसंगत्यागेन सत्सं

विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी ऋते त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान्
५९ इति श्रीभागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे द्वाविंशोऽध्यायः २२
श्रीशुक उवाच स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः सभाजयन्भृत्यवचो
मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः १ श्रीभगवानुवाच बार्हस्पत्य स नास्त्यत्र साधुर्वै दुर्ज
नेरितैः दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः २ न तथा तप्यते विद्धः पुमान्बाणै
र्मर्मगैः यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ३ कथयन्ति महत्पुण्यमितिहासमिहो
द्धव तमहं वर्णयिष्यामि निबोध सुसमाहितः ४ ॥

गः इति क्रमेणोपाया भगवता वर्ण्यंते आशंसितः
प्रार्थितः भृत्यस्य वचः सत्कुर्वन् तं भृत्यं प्रति आबभाषे १ तत्र तावद्दुर्गाकारं तस्य उद्धवः सं जयति द्वाभ्यां हे बार्ह
स्पत्य बृहस्पतेः शिष्य अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तैर्भिन्नं क्षुभितं मनः शमयितुमीश्वरः स्यात् २ कुतइत्य
त आह नेति यथा मर्मस्थाः मर्मस्पृश निरन्तरं स्थिताः परुषोक्तिरूपाः इषवस्तुदंति व्यथयंति तथा इतरैर्बाणैर्नतुदंति
अतस्तितिक्षा नतु प्यत इत्यर्थः ३ तथापि मया वक्ष्यमाणोपायैः सर्वं सोढुं शक्यमित्यभिप्रायेणेतिहासं प्रस्तौ
ति महदिति यथा भवति तथा पुण्यमितिहासं गाथा कथयंति ४ ॥ ॥ ॥

४ सत्त्वमित्युः पूर्वं धनाढ्यः कृच्छ्रा[illegible]तस्य धनस्य नाशेन संतप्यमानो निर्विण्णः सन् प्रव्रज्यामित्वा मटन्दुर्जनैरुप
द्रुतः प्रस्तुतोपयोगिनीं गाथामगायदिति वक्तुं तस्य चरितमाह अवंतिष्विति द्वाभ्यां अवंतिषु मालवेषु वार्त्ता कृषिवाणि
ज्यादिरूपा वृत्तिर्यस्य कदर्य[illegible] अस्मस्तात्तुकः आत्मानं धर्मं कृत्यं च पुत्रदारादीश्च पीडयन् देवतातिथिभृत्यांश्च सतक
दर्य इति स्मृतः इति ६ तस्य पत्ना तयोर्बांधवाः आतिथ्ययोः ध्वनीनाश्च तेनना र्चिताः स्वयं च शून्यावसथो धर्महीनेगृ
हे देहे वा ७।८ यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य पंचभागिनः पंच यज्ञदेवताः ९ तेषामेव ध्यानमनाद

केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः स्मरता धृतियुक्तेन विपाकं निजकर्मणां ५ अवंतिषु द्विजः

रा २

कश्चिदासीदाढ्यतमः श्रिया वार्त्तावृत्तिः कदर्यस्तु कामी लुब्धोतिकोपनः ६ ज्ञातयोतिथयस्त

स्य ३

स्य वाङ्मात्रेणापि नार्चिताः शून्यावसथ आत्मापि काले कामैरनर्चितः ७ दुःशीलस्य कदर्यस्य द्रु
ह्यंते पुत्रबांधवाः दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियं ८ तस्यैवं यक्षवित्तस्य च्युतस्योभय
लोकतः धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ९ तदवध्यानविस्रस्तपुण्यस्कंधस्य भूरि

१२४

द अर्थोप्यगाछन्निधनं बह्वायासपरिश्रमः १० ज्ञातयो जगृहुः किंचित्किंचिद्दस्यव उद्धव दैव
तः कालतः किंचिद्ब्रह्मबंधोर्नृपार्थिवात् ११ स एवं द्रविणे नष्टे धर्मकामविवर्जितः उपे
क्षितश्च स्वजनैश्चिंतामाप दुरत्ययां १२ ॥ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः खिद्यतो बा
ष्पकंठस्य निर्वेदः सुमहानभूत् १३ ॥ रः तेन विस्रस्तो विशीर्णः पुण्यस्कंधः अर्थलाभमात्रहेतुरंशोप

स्य तस्य बह्वायासैः कृष्यादिभिः केवलं श्रमोपत्तिर्यस्य १० कुतो निधनमगाछत्तत्राह ज्ञातय इति दैवतः गृहदाहा
दिना कालतः निखातं धान्यादि नृणां पार्थिवानां च दंडैकं तस्मात् ११।१२ नष्टरायः नष्टो रायः अर्थो य
स्य तस्य तपस्विनः संतप्तस्य १३ ॥ ॥ रामः ॥

मेमया आत्मा देहः व्यर्थ एवात्मानुतापनं प्रपंचयति न धर्माय इत्यादिना यस्य ईदृशोऽर्थायासः तेन मया १४ नर
काय च सत्यर्थे धर्माननुष्ठानात् १५ श्वित्रः श्वेतकुष्ठं १६ सिद्धेऽर्थे तस्योत्कर्षे संवर्द्धने नाशोपभोगयोः इति
कं नाशोपभोगे चेत्यर्थः साधनोत्कर्षयोरायासः ततः त्रासः चिंता च नाशे भ्रम इति १७ किं च अर्थप्राप्त्यर्थे
स्तेयादयः पंचदशार्थाः आद्ये प्रसंगे व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि १८ । १९ भे
द्वैरस्पर्द्धाः प्रपंचयति भिद्यंते इति भिद्यंते त्यजंति कथमरः एकास्निग्धाः एके एकचित्ताः ते च ते अ॥

सचाहेदमहोकष्टं व्यथात्मा मेऽनुतापितः न धर्माय न कामाय यस्यार्थायास ईदृशः १४
प्रायेणार्थाः कदर्याणां न सुखाय कदाचन इह चात्मोपतापाय मृतस्य नरकाय च १५ य=
शो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः लोभः स्वल्पोऽपि तान् हंति श्वित्रो रूपमिवेप्सि
तं १६ अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये नाशोपभोग आयासः त्रासः चिंता भ्रमो
नृणां १७ स्तेयं हिंसानृतं दंभः कामः क्रोधः स्मयो मदः भेदो वैरमविश्वासः संस्पर्द्धा व्यसना
नि च १८ एते पंचदशानर्था ह्यर्थमूला मता नृणां तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्य
जेत् १९ भिद्यंते भ्रातरो दाराः पितरः सुहृदस्तथा एकास्निग्धाः काकिणिना सद्यः सर्वेऽर
यः कृताः २० अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः त्यजंत्याशु स्पृधो घ्नंति सहसो
त्सृज्य सौहृदं २१ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद् द्विजाग्र्यतां तदनादृत्य ये स्वार्थं घ्नंति या

स्निग्धाः प्रीतिप्रियास्ते सर्वे कृताः काकिणिना पुंस्त्वमार्षं विंशतिवराटिका काकिणी तया २० संरब्धाः क्षुभिताः
स्पृधः स्पर्द्धमानाः २१ इदानीं वा स्वर्णनिष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्था एव तेषामित्याह लब्ध्वेति त्रिभिः मानुष्यं ज
न्म तत् तत्रापि द्विजाग्र्यतां ब्राह्मण्यं स्वार्थं घ्नंति आत्महितं न कुर्वंति ये तेषां २२ ॥ ॥

अमरप्रार्थितां दर्शयन्नाह स्वर्गेति लोकं देहं अनुषज्जेत आसक्तिं कुर्यात् २३ अथ यो मनुष्यः यक्षवत्तत्र अपयन्नपोर्दे-
वताः देवपितृभूतानि ज्ञातयः सगोत्राः बंधवो विवाहादिना संबद्धाः तान् अन्यांश्च भागिनः भागार्हान्
आत्मानं च असंविभज्य अन्नादिभिरसंतर्प्य २४ एवं विमृश्य अनुतप्यमान आह व्यर्थयार्थेहया अश्मतस्य मे वित्तादि
गतं शेमिति शेषः येन वित्तादिना कुशला विवेकिनः सिध्यंति मुच्यंते जरठो वृद्धः २५ अन्यमपि स्वसदृशं शोचति
कस्मादेवमनर्थं विद्वानपि संक्लिश्यति कारणं संभावयति कस्यचिदिति २६ ननु नायं मोहितः क्लिश्यति किंतु ध-

स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् [illegible] द्रवि-
णे को नुसज्जेत मर्त्यो नर्थस्य धामनि २३ देवर्षिपितृभूतानि ज्ञातीन्बंधूंश्च भागिनः असं-
विभज्य चात्मानं यक्षवित्तः पतत्यधः २४ व्यर्थयार्थेहया वित्तं प्रमत्तस्य वयो बलं कुशला येन
सिध्यंति जरठः किं नु साधये २५ कस्मात्संक्लिश्यते विद्वान्व्यर्थयार्थेहयासकृत् कस्यचि-
न्मायया नूनं लोकोयं सुविमोहितः २६ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत मृत्युना ग्र-
स्यमानस्य कर्मभिर्वोत जन्मदैः २७ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः येन नीतो दशा-
मेतां निर्वेदश्चात्मनः प्लवः २८ सोहं कालावशेषेण शोषयिष्येंगमात्मनः अप्रमत्तोखि-
लस्वार्थे यदि स्यात्सिद्ध आत्मनि २९ तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः मुहूर्तेन ब्र-
ह्मलोकं खट्वांगः समसाधयत् ३०॥

नादिभिर्भोगादिविधित्सया अत आह किं धनैरिति उत वनैरपि २७
इदानीं संपन्नविवेकः सन् हृष्यन्नाह नूनमिति त्रिभिः येन प्रीतेनात्मनः प्लवः पोतः निर्वेदश्च भवति स हरिर्मे नूनं
प्रीत इति २८ अंगं शोषयिष्ये तपसा यद्वा विषयालंपनेच्छामितपदिस्यात्कालावशेषस्तर्ह्यात्मन्येव सिद्धः तुष्टः
सन् अखिलस्वार्थे धर्मादिसाधने अप्रमत्तः सन् २९ अनुमोदेरन् अनुगृह्णंतु नन्वेवं देवैरनुमोदितोपि जरठः
अल्पेन कालेन किं साधयिष्यसि तत्राह मुहूर्तेनेति ३०॥

अभिप्रेत्य निश्चित्य आवंत्यः अवंतिदेशभवः हृदयग्रंथीन् अहंकारममकारान् ३१ असंगः आसक्तिशून्यः अलक्षितः स्वमप्रकाशयन् ३२ प्रवयसं वृद्धं अवधूतं मलिनं पर्यभवन् अवमेनिरे हे भद्र परिभूतिभिस्ति-
रस्कारैः ३३ परिभवानेव दर्शयति केचिदिति सप्तभिः ३४ भो भगवन् गृहाण इति दर्शितानि तानि पुनः प्रदाय पुनरम्मा

श्रीभगवानुवाच इत्यभिप्रेत्य मनसा ह्यावंत्यो द्विजसत्तमः उन्मुच्य हृदयग्रंथीन् शांतो
भिक्षुरभून्मुनिः ३१ स चचार महीमेतां संयतात्मेंद्रियानिलः भिक्षार्थं नगरग्रामानसंगो
ऽलक्षितोविशत् ३२ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः दृष्ट्वा पर्यभवन् भद्र बह्वीभिः परिभू-
तिभिः ३३ केचित्त्रिवेणुं जगृहुरेके पात्रं कमंडलुं पीठं चैके क्षसूत्रं च कंथां चीराणि केचन ३४
प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः अन्नं च भैक्ष्यसंपन्नं भुंजानस्य सरित्तटे ३५ मूत्र-
यंति च पापिष्ठाः ष्ठीवंत्यस्य च मूर्द्धनि यतवाचं वाचयंति ताडयंति न वक्ति चेत् ३६ तर्जयं-
त्यपरे वाग्भिः स्तेनोयमिति वादिनः बध्नंति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ३७ क्षिपंत्येके
वजानंत एष धर्मध्वजः शठः क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ३८ [illegible]
ष महासारो धृतिमान् गिरिराडिव मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ३९ इत्येके
विहसंत्येनमेके दुर्वातयंति च तं बबंधुर्निरुरुधुर्यथा क्रीडनकं द्विजं ३० ॥

रुदुः ३५ अन्ने मूत्रयंति मूर्द्धनि च ष्ठीवंति पूत्कारेण श्लेष्माणं प्रक्षिपंति ३६ क्षिपंति निंदंति निंदामेवाह एष ध-
र्मध्वजः त्रिदंडलिंगोपजीवी शठो लोकवंचकः तदेवाह क्षीणवित्त इति ३८ महासारः अतिबली ३९ दुर्वातयंति
तदुपर्यधोवायुं मुंचंति बबंधुः शृंखलैः निरुरुधुः कारागृहादिषु द्विजं शुकसारिकादि यथा ३० ॥ ॥।॥

भौतिकं दुर्जनादिकृतं दैहिकं ज्वरादिनिमित्तं दैविकं शीतोष्णादि एवं दिष्टं दैवप्राप्तं ४० धर्मात्पातयद्भिः परिभूतो
ऽपि सात्त्विकीं धृतिमास्थायैव स्थितः इमां वक्ष्यमाणां गाथामगायत सात्त्विकीं धृतिमाह धृत्या यया धारयते मनः
प्राणेन्द्रियक्रियाः योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकीति स्मृतेः ४१ नायमेवाष्टादशश्लोकीं गाथामाह
नायमिति जनो नात्मा नापि ग्रहादयः मनः परं केवलं सुखदुःखयोः कारणमवदन्ति मनसोऽस्य उपपादयति मनसाऽस्य गुणानी
त्यादिस्मृतयः ४२ परिवर्तनप्रकारमाह मन इत्यादि गुणान् गुणवृत्तीः सृजति ततश्च तेभ्यो गुणेभ्यः शुक्लानि सा

एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् भोक्तुरात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ४०
परिभूत इमां गाथामगायत नराधमैः पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीं ४१
द्विज उवाच नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः मनः परं कारणमाम
नन्ति संसारचक्रं परिवर्तयेद्यत् ४२ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्ष
णानि शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ४३ अनीह आत्मा
मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे मनः स्वलिङ्गं परिगृह्य कामान् जुषन्निबद्धो

ग३

त्त्विकानि कृष्णानि तामसानि लोहितानि राजसानि सवर्णाः तत्तत्कर्मानुरूपाः सृतयः देवतिर्यगादिजातयः ४३
तर्हि मनस एव संसारः स्यान्नात्मन इत्याशङ्क्याह अनीह इति अयमर्थः अविद्यया मनोध्यासेनैवात्मनः संसृतिः।
ननु स्वतः एतस्य तत्संतानस्येश्वरस्य सा नास्ति किं तु तत्कृतो जीवस्यैवेति वदन्नाह मनसा समीहमानेन सहानुवर्तमानत्वे।
नवर्तमानोऽपि परमात्मा अनीहः तत्क्रियासङ्गरहितः यतो हिरण्मयः विद्याशक्तिप्रधानः कुतो यतो मत्सखः मज्जीव
स्य सखा नियन्ता अतः उद्विचष्टे अतिरोहितज्ञानेन केवलं पश्यतीत्यर्थः अतोऽन्यः जीवः स्वलिङ्गं स्वलि
ङ्गात्मनि लिङ्गयति द्योतयति संसारमिति तथा तं मनः परिगृह्य आत्मत्वेन स्वीकृत्य अतस्तस्य मनसो गुणैः कर्म
भिः सङ्गतः संबद्धः गुणसङ्गात्कामान् जुषन्निबद्ध इति ४४ ॥ ॥ ॥

अतो मनोनिग्रहे कृते सर्वं कृतं तस्मात्तं विना तु सर्वमपार्थमित्याह दानमिति द्वाभ्यां स्वधर्मः नित्यनैमित्तिकः सद्व्रतान्ये
कादश्युपवासादीनि अन्यानि च यावन्ति कर्माणि एते सर्वे उपाया मनोनिग्रहलक्षणः अन्तो निष्ठा फलं येषां ते त।
ध्यानकुशलानां गत्वं तेषां प्रसिद्धं तत्राह मनसः समाधिर्निग्रह एव परो योगः दानं ४५ अतो यस्य मनः समाहितं भवति
तस्य किं कृत्यमस्ति वदेति परं प्रत्युपदिशन्निव स्वयमेवाह असंयतं विक्षिप्तं चेत् यद्वा विनश्यत् आलस्यादिना।
लीयमाने चेद्दैवात्तर्हि एभिर्दानादिभिः किमपरं प्रयोजनं स्यात् न किंचिदित्यर्थः ४६ ननु इतरेन्द्रियजयः अयो

दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि सर्वे मनोनिग्रहलक्षणान्ताः
परो हि योगो मनसः समाधिः ४५ समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य
कृत्यम् असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ४६ मनोवशेऽन्ये ह्यभ
वन्स्म देवा मनश्च नान्यस्य वशं समेति भीष्मो हि देवः सहसः सहीयान्युञ्ज्याद्वशे तं
स हि देवदेवः ४७ तं दुर्जयं शत्रुमसह्यवेगमरुंतुदं तन्न विजित्य केचित् कुर्वन्त्यसद्वि
ग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ४८ ॥



जनं स्यान्नेत्याह मनोवश इति देवा इन्द्रियाणि
तदधिष्ठातारो वा भीष्मो योगिनामपि भयंकरः मनोलक्षणो देवः कुतः सहसो बलादपि बलिनोऽपि वा सहीयान् =
बलीयान् अतस्तं यो वशवर्तिनं कुर्यात् स एव देवदेवः सर्वेन्द्रियजेता भवति नान्यः तथा च श्रुतिः मनो वशे सर्व
मिदं बभूव नान्यस्य मनो वशमन्वियाय भीष्मो हि देवः सहसः सहीयानिति ४७ अतः असह्यो रागादिरूपो वेगो य
स्य तं अत एव अरुंतुदं अरुं मर्म तत्तुदति व्यथयतीत्यरुंतुदः तं तन्न तेति छेदः तं न विजित्य अजित्वा तत् ततः ये
केचिन्मर्त्यैः कैश्चित् असद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रतिकूलादीन् अन्यान् मित्रादीन् कुर्वन्ति ते मूढाः स

मतज्ञाते अनेन प्रकारेण संसारे भ्रमंतीत्याह देहमिति इमं नो मात्रपरिकल्पितमिमं स्वदेहमहमिति त्वादि देहं च मम-
मेति स्वीकृत्य तमसि संसारे ४९ तदेवं मनस एव सुखदुःखकारणत्वमुपपाद्येदानीं जनादीनां षण्णामकारणत्वं
प्रपंचयति जनस्त्विति षड्भिः अत्र च अस्मिन्नपि पक्षे आत्मनः किं न किंचित्सुखदुःखकर्तृत्वं तत्त्वं चेत्स-
यः कुतः इत्यत आह हि निष्क्रियत्वं भौमयोर्म निर्विकारयोर्देहयोस्तत् न त्वात्मनः अमूर्तस्याक्रियस्य च हननादिषु
कर्मत्वकर्तृत्वानुपपत्तेः तथापि दुःखमात्मापर्यवसाय्येवेति चेत् एवमपि परमात्मनश्चात्मभयत्रात्मकत्वात्को-

देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यंधधियो मनुष्याः। एषोऽहमन्योऽयमिति भ्रमेण दुरंत-
पारे तमसि भ्रमंति ४९ जनस्तु हेतुः सुखदुःखयोश्चेत् किमात्मनश्चात्र हि भौमयोस्तत् जि-
ह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ५० दुःखस्य हेतुर्यदि देवतास्तु किं
आत्मनस्तत्र विकारयोस्तत् यदंगमंगेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे
५१ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः नह्यात्मनोऽन्यद्यदि त-
न्मृषा स्यात् क्रुध्येत कस्मान्न सुखं न दुःखं ५२ ॥

पविषयोऽस्तीति स्वदृष्टान्तेन दर्शयति जिह्वामिति ५० यदि दे-
वता अस्तु नाम तत्रापि पक्षे आत्मनः किं यतो विकारयोर्विक्रियमाणयोर्देवतयोस्तत् हस्तेन मुखे निहते तेनैव हस्ते
देवताद्वयमानिनोर्वह्नीन्द्रयोरेव तत् न त्वविक्रियस्यात्मनः देवतानां च सर्वदेहेष्वभेदात् कोपविषयोऽस्ती-
ति स्वदेहदृष्टान्तमाह यदंगमिति यदा अंगदेवताधिष्ठानेन हस्तेन मुखादिकं अतएव सर्वत्र देवताधिष्ठाने एवमेव विकारं इति।
दाहरणं ५१ आत्मनः सुखदुःखाद्याकारः परिणामः अतएव हेतुर्यदि स्यात् तत्र तस्मिन्पक्षे अन्यतः किं न किं-
चिदन्यतो भवति यस्मै कुप्येदित्यर्थः यतो निज एव स्वभावः सन् त्वात्मनः तथा परिणामोऽन्यनिमित्ततो भवति अतोऽस्ति
कोपविषय इति चेत्तत्राह न हीति आत्मनो व्यतिरिक्तं नास्त्येव यदि स्यात् अस्तीति प्रतीयेत तर्हि तन्मृषैव अतः कस्मै

ग्रहफलेष्वजस्यात्मनः किं। यतः जन्मतः इति जनो देहस्तस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थग्र-
हाः सुखदुःखयोर्निमित्तं भवंतीति किं च अंतरितस्यैव ग्रहस्य ग्रहस्यैव यादृशो दृष्ट्यादिभेदैः पीडां वदंति द-
क्षा न तु ग्रहकोणादिदृष्टिस्थितस्य तद्दृष्टागोचरस्य ग्रहगतैव तु पीडा तल्लग्निनोऽन्यस्य देहे तत्स्वामिमानाद्भवति अतः
पुरुषस्ततो ग्रहाद्देहाद्वान्यः कस्मै क्रुद्धेत ५६ कर्महेतुश्चेत् आत्मस्वरूपोपगमः कर्म वा नास्ति कुतस्तस्य हेतु-
त्वमिति निराहयस्मात् तत्कर्म एकस्य जडाजडत्वे सति स्यात् जडत्वादिकारित्वोपपत्तेः अजडत्वाच्च हितानुसा-

ग्रहा निमित्तं सुखदुःखयोश्चेत् किमात्मनो जन्यजनस्य तैर्वै ग्रहे ग्रहस्यैव वदंति पीडां क्रु-
द्धेत कस्मै पुरुषस्ततोऽन्यः ५७ कर्मास्तु हेतुः सुखदुःखयोश्चेत् किमात्मनस्तद्धि जडाज-
डत्वे देहस्त्वचित्पुरुषोऽपि सुपर्णाः क्रुद्धेत कस्मै न हि कर्ममर्त्ये ५७ कालस्तु हेतुः सुख-
दुःखयोश्चेत् किमात्मनस्तत्र तदात्मकोऽसौ नाग्नेर्हितापो न हि मस्य तस्मात् क्रुध्ये-
त कस्मै न परस्य द्वंद्वं ५५ ॥

ध्यानतः प्रवृत्तिसंभवात् अचिज्जडो देहः अतः तस्य प्रवृत्तिर्न संभवति पुरुषस्तु सुपर्णाः शुद्धज्ञानस्वरूपः अतः क-
स्मै क्रुध्येत् यतः सुखदुःखयोर्मूलं भूतकर्मैव नास्तीति ५७ तत्र कालपक्षेऽपि आत्मनः किं यतोऽसौ कालात्मकः ए-
व तत्र आशात्वात् तस्याशस्य स्वतः पीडा नास्तीत्यत्र दृष्टांतः नाग्नेर्हितास्तद्दशस्य ज्वालारस्तापो दाहतो नाशोऽस्ति।
तत्रोपाधिभूतकाष्ठाशादाहान्नाशः स्यादिति दृष्टांतोत्तरमाह हिमस्य तत्स्वोत्पत्तदेशस्य तुषारकणस्य नाशाऽक-
स्मात्स्यादित्यर्थः किं च आत्माऽमृतत्वं वस्तुतः यानाबाधेन च परस्य द्वंद्वं सुखदुःखादिकं नास्तीति ५५ ॥ ॥

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते आत्मनः सर्वभावानामागमापायचिंतया १ स्वपदं दृढभक्तानाम
दृढत्वाय स्वयं मचितसोत्काशुनः कृष्णः सांख्यमथाहतत्कृते २ अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा स
र्वं द्वैतमुद्दिश्य पुनस्तत्रैव लीयते ३ त्यनुसंदधानस्य द्वंद्वभ्रमो निवर्तते ४ तिवक्तुं सांख्यं प्रस्तौति अथेति पूर्वैः कपिलादि
भिर्विनिश्चितं वैकल्पिकं भेदनिमित्तं भ्रमं सुखदुःखादिरूपं १ अथो शब्दः कार्त्स्न्ये ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोपि
पदार्थः अविकल्पितं विकल्पशून्यमेकमेव ब्रह्मण्येव लीनमासीदित्यर्थः कदेत्यपेक्षायामाह अयुगेयुगेभ्यः पूर्वं

अ१ श्रीभगवानुवाच अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितं यद्विज्ञाय पुमान्सद्यो
जह्याद्वैकल्पिकं भ्रमं १ आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितं यदा विवेकनिपु
णा आदौ कृतयुगे ऽयुगे २ तन्मायाफलरूपेण केवलं निर्विकल्पितं वाङ्मनोगोचरं स
त्यं द्विधा समभवद्बृहत् ३ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ज्ञानं त्वन्यतमो
भावः पुरुषः सोभिधीयते ४ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः मया प्रक्षोभ्यमाणा
याः पुरुषानुमतेन च ५ ॥

प्रलये त्वर्थः तथा आदौ कृतयुगे तस्मिंश्च अन्यदापि यदा विवेकनि
पुणा जना भवंति तदापि तेषां भेदास्फूर्तेः २ तद्बृहद्ब्रह्म वाङ्मनोगोचरं सत्यं भवति तथा मायायां दृश्यं फलं तत्प्र
काशः तद्रूपेण मायाविलासरूपेण वा द्विधाभूत् ३ तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यरूपि
णी ४ अभवन् अभिव्यक्ता बभूवुः मया परमेश्वरेण जीवादृष्टप्रयुक्तत्वात्क्षुब्धः पुरुषानुमतत्वं यदा स्वस्मै
व प्रकृतीक्षणात्मायायाः पुरुषावस्थातदनुमतेन तद्द्वारेणेत्यर्थः ५ ॥ ॥ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ततो महान् ज्ञानशक्तिः न त्वयं महानेव प्रथमो विकारः प्रसिद्धः तत्राह सू-
त्रं च ज्ञानक्रियागर्भत्वात् सूत्रेण संयुतः न पृथक् एकमेव तत्त्वं क्रियाज्ञानशक्तिमत् अतो हि द्विधोच्यत इत्यर्थः विमोहनः
जीवस्य भ्रमहेतुः संजातः ६ यतस्तन्मात्रादीनां कारणं मनःशब्देनैवानामप्युपलक्षणं चिदचिन्मयः चिदा-
भासव्याप्तत्वादुभयं ज्ञेयरूप इति जीवोपाधित्वाद्धर्मं प्रयोपितं तस्मात् तस्मादात्मन आकाशः संभूत इत्यादिश्रु-
तेरन्नमयं हि सोम्य मन इत्यादिश्रुतेश्च प्रथमं भूतानि जायन्ते तेभ्यो पंचीभूतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिंग-
शरीरं पंचीकृतेभ्यश्च ब्रह्माण्डं तस्मिन्वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणः तन्नाभिपद्मे

तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ततो विकुर्वतो जातो योऽहंकारो विमोहनः ६
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः
७ अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च तैजसाद्देवता आसन्नेकादश च वैकृ-
तात् ८ मया संचोदिता भावाः सर्वे संहत्यकारिणः अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ९

च वैराजस्य भोगविग्रहश्चतुराननः ततो यथावसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथापि चित्ताभिमा-
नि रूपकोऽहंकारस्ततो भूतेन्द्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुक्ता तेन तथोक्तं महान्सोऽहं विष्णुलिंगा-
द्यैः सृष्टिर्याचोदिता नान्यथा उपायः सावतारापनास्ति भेदः कथं च नेति ७ तस्मात् त्रिविधात् त्रिविधप्रपंचोत्पत्तिं द-
र्शयति अर्थ इति तन्मात्रिकात् शब्दादितन्मात्रकारणात् तामसात् तद्धारणीमहाभूतरूपो जज्ञे एवमेव मूर्तानाम्
आवरणस्वभावत्वात् इन्द्रियाणि दश तैजसात् राजसाहंकारात् तेषां प्रवृत्तिस्वभावत्वात् वैकृतात् सात्त्विका-
त् देवता दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपमित्रकाश्चन्द्रक एकादश च शब्दान्मनश्च तेषां प्रकाशस्वभावत्वा-
त् ८ मया संचोदिता भावाः ९ ॥ ॥ ॥ ॥

सलिले संस्थिते तिर्यस्थते सलिले सलसंस्थिते तस्मिन् सलिलसंस्थिते वै डे श्रीनारायणरूपो लीलाविग्रहे
ण समभवं स्थितः स्वयं विद्याख्ये लोककारणम् तेन तत्र चात्मभूः चतुराननरूपो योगविग्रहेण पुनर्वैराजए
व तस्मिन्नाविर्भूतः स्वयं १० रजसा युक्तो मदनुग्रहात् तपसाहजतम्भूः अतलादिसहिता भुवः अन्तरिक्षलोकः
स्वः स्वर्गः महर्लोकादेरप्युपलक्षणं ११ लोकसृष्टि प्रयोजनमाह देवानामिति सार्द्धेन ओको निवासः परस्थानं त्रि
तयात्परं महर्लोकादि भूमेरधः अतलादि १२ एवं व्यवस्थायां कारणमाह सार्द्धेन त्रिलोक्यां पातालादिसहिता

तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ मम नाभ्यामभूत्पद्मं विद्याख्यं तत्र चात्मभूः १०
सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् लोकान्सपालान्विश्वात्मा भूर्भुवःस्वरिति त्रिधा ११
देवानामोक आसीत्स्वर्भूतानां च भुवः पदं मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परं अ
धोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः १२ त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनां
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः १३ मया काला
त्मना धात्रा कर्मयुक्तमिदं जगत् गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति १४ अणुर्बृहत्कृ
शः स्थूलो यो यो भावः प्रसिद्ध्यति सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च १५ ॥

योगादितारतम्येन
यथोत्तरं महर्लोकादयः मद्गतिर्वैकुण्ठलोकः १३ तत्र तु मद्गतिव्यतिरेकेण न रागतयश्चलाः इत्याह मयेति सार्द्ध
मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन हेतुभूतेन गुणप्रवाहे संसारे उन्मज्जति आसत्यलोकमुत्त
मां गतिं प्राप्नोति पुनर्निमज्जति आस्थावरं नीचां गतिं प्राप्नोति १४ सृष्टि निरूपणस्याद्वितीयात्म प्रतिपत्त्यर्थत्वा
त् तत् प्रतिपादनापकारेण कार्यस्य व्याप्तिमाह अणुरिति डभयेन संयुक्तो व्याप्तः [illegible] प्रकृत्येति १५

दृश्यानीं कार्यस्य कारणात्मत्वादर्शी यन्नियमस्य कार्यस्य पञ्चादि:कारणांशेन: लयस्थाने च तस्य मध्यमध्यावस्थापि सा ॥
वैवप्रसिद्धं मल्लु वर्णादि बुभूतत एवाव्यभिचारित्वात्सा एव सन्नेतर: अत्वन्तर्हि मिथ्याभूतकार्यस्य च्छानताहवि
कार इति तैजसा: कटककुंडलादय: पार्थिवा घटशरावादय प्रपञ्चेति १६ नन्वेवं तर्हि स्वकार्यं प्रति महदादीनो
मप्यायत्तरूपत्वात्सत्यत्वं स्यात्तत्राह यदिति यद्रूपमुपादाय यदुपादानकारणतया लीकृत्य पूर्वं कारणरूपो महदा
दिर्भाव: परं पश्चाद्विकारादिकं भावं विकुरुते सृजति यथा पिंडो मृद्रूपमुपादाय स्वयं निमित्तो घटं सृजति तद्रूपमेव सन्नि ।

यत्तु यस्माद्भिन्नं तत्स्यात्सवैमध्यं च वसन् विकारो व्यवहारार्थो यथा तैजसपार्थिवा: १६
यदुपादाय पूर्वं स्तु भावो विकुरुते परं आदिरंतो यदा यस्य तत्सत्यमभिधीयते १८ ॥
प्रकृतिर्ह्यस्योपादानमाधार: पुरुष: पर: सतो भिव्यंजक: कालो ब्रह्मतत्त्रितयं त्वहं १९
सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यश: महान् गुणविसर्गार्थ: स्थित्यंतो यावदीक्षणा २० ॥

ति पूर्वं स्यानुक्षणा: कथं तर्हि मृत्तिकेत्येव सत्यमित्यादि श्रुति: तदाह आदिरिति यत्र यदा यस्मादिरंतश्चाविवक्षितेन तदा ।
तत्सत्यमभिधीयते मृत्पापरमकारणस्यात्मन: सत्यत्वविवक्षयेत्यर्थ: १८ ननु तथापि प्रकृति पुरुषकालानामकार्यत्वात्ता नौ
भिन्नत्वात्कथमद्वैतोपपत्तिस्तत्राह प्रकृतिरिति अस्य सत: कार्यस्योपादानं प्रकृति: प्रसिद्धा प्रपञ्चस्य तस्या आधार: अधि
ष्ठाता पर: पुरुष: प्रपञ्चगुणक्षोभेणाभिव्यंजक: कालस्तत्त्रितयं ब्रह्मरूपोहमेव न तु पृथक्प्रकृते: शक्तित्वात्पुरुष
कालयोरवस्थारूपत्वात् १९ एवं तावत्कालत्रयेप्यव्यभिचारित्वात्ब्रह्मैव सत्यमिति वक्तुं तस्य सृष्टि कारणत्वं ।
नादेर्मत्वमल्पकाममध्यपितस्यैव सत्वमुपपादयति प्रवाहेत्वेन सत्वं दर्शयिष्यन्सर्गप्रवाहरूपाया: स्थितेरवधिमाह ।
सर्ग इति महान्मयूल: पौर्वापर्येणापि प्रवाहरूपेणानित्यश: अविच्छेदेनाकर्मं प्रवर्तते तदाह गुणक्षुदेहेषु विवि
धतया सृज्यत इति गुणविसर्गो जीव: तदर्थ: तद्भोगप्रयोजन: किं पर्यंतं प्रवर्तते तत्राह यावत् स्थितेरंत: सोपि किं

२९

प्रलयं निरूपयति विराडित्र्यष्टाभिः मया कालात्मना आसाद्यमानः व्याप्यमानः लोकानामहरहः कल्पाः सृष्टिप्रल
याविविधाः कल्प्यन्ते यस्मिन्नतान्तास्मिन् विकल्पयतीति तथाभूतोऽपि पञ्चत्वरूपाय विशेषाय विभागाय कल्पते
योग्यो भवति पञ्चानां भूतानामेकरूपत्वेनोपपत्त्यभावादस्यानन्तरं पूर्वतीत्यर्थः २१ तत्र तस्माद्धाता तस्मादात्मनः आका
शः संभूत आकाशाद्वायुर्वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्योऽन्नं अन्नात्सुरस इ
ति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन प्रलयमाह अन्नमिति मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने शतवर्षावर्षणेनाव
ष्ट्या लीनेऽसति तेनैव लीयत इत्यर्थः अन्नं धानासु बीजमात्रावशेषं भवतीत्यर्थः धाना भूमौ उप्ता नश्यन्तीत्यर्थः

विराण्मयासाद्यमानो लोककल्पविकल्पकः पंचत्वाय विशेषाय कल्पते भुवनैः स
ह २१ अन्नं प्रलीयते मर्त्यं मर्त्यं धानासु लीयते धाना भूमौ प्रलीयंते भूमिर्गंधे प्रलीयते २२
अप्सु प्रलीयते गंध आपश्च स्वगुणे रसे लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते २३
रूपं वायौ स च स्पर्शे लीयते सोऽपि चांबरे अंबरं शब्दतन्मात्र इंद्रियाणि स्वयोनिषु २४

भूमिर्गंधे संवर्तकार्कदीप्त्या शोषिता संकर्षणमुखाग्निदग्धा च सती भूतत्वरूपं त्यक्त्वा गंधमात्रावशेषा भवति २२
अप्सु गंधः शतवर्षपर्यन्तं वर्षेण प्लाव्यमानोऽप्सु लीयते एवमेवापश्च ज्योतिषा शोष्यमाणा रसमात्रावशेषा भवंति
तत्रापि रसोऽपि तस्मिन् लीयते ज्योतिश्च वायुनाभिभूयमानं रूपमात्रं सत्तस्मिन् लीयते २३ वायुश्च कालप्रेरि
तेनांबरेण ग्रस्तः स्पर्शमात्रः सन् तस्मिन् अंबरं च भूतादिना हंकारेण ग्रस्यमानं शब्दतन्मात्रे तदेवं तामसाहंका
रस्य शब्दपर्यन्तं लयमुक्त्वा राजसाहंकारकार्यस्याप्याह इंद्रियाणि स्वयोनिष्विति स्वप्रवर्तकदेवतासु तेषां प्र
वृत्तिस्वभावत्वात्स्वतेषां देवताधीनत्वात्तासु लय इति वाचोयुक्तिः वस्तुतस्तु स्वकारणे राजसाहंका

रामः

योनिरिन्द्रियहेतुगतत्वादेकत्वमविवक्षितं योनयो देवतास्तु मनसि कृतः ईश्वरे निपततरिमनो वशोऽन्यमवनस्य
देवाः सुक्तत्वात् इन्द्रियलयोक्त एवात्राप्यभिप्रायः मनश्च देवताभिः सह वैकारिकेऽहंकारे लयं तामसाहंकार
कार्यविशेषितस्य शब्दस्य लयमाह शब्दो भूतादिं तामसाहंकारं अप्येति तस्मिन् लीयते सर्वः भूतादिरित्यु
पलक्षणं त्रिविधोऽप्यहंकारो महति जगतां विहायसता निक्रियाशक्तिमात्ररूपो भवतीत्यर्थः ततः प्रभुः समर्थः स
र्वजगन्मोहकत्वात् २५ स च महान् स्वकारणेषु गुणेषु लीनः क्रियाशक्तिमत्वाद्गुणवत्तमत्वाद्गुणान् विहाय
गुणमात्ररूपो भवतीत्यव्यक्तं प्रकृतिसाम्यावस्थां गच्छतीत्यर्थः तदव्यक्तं कालकालोऽधीनत्वात्तेनैकीभवति

योनिर्वैकारिके सोऽप्यलीयते मनसीश्वरे शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः २५
स लीयते महान्स्वेषु गुणेषु गुणवत्तमः तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये २६
कालो मायामये जीवे जीव आत्मनि मय्यजे आत्मा केवल आत्मस्थो विकल्पापा
यलक्षणः २७ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः मनसो हृदि तिष्ठेत व्योम्नीवा।

ष्ठति अव्यक्ते उपरतवृत्तौ २६ मायामये मायाप्रवर्तके ज्ञानमये वा अत एव जीवयतीति जीवस्तस्मिन् महापु
रुषे अयं भावः विश्वस्य सृष्टिसंहारोपकरणरूपः कालो यदंशेन हृदयस्थ अन्तर्यामितयावतिष्ठत इति तदुक्तं
सप्तमे कालं चरन्तं सृजतीश आश्रयं प्रधानपुम्भ्यां नरदेव सत्यकृत् इति योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामा
हुर्यश्च चेष्टते येन विश्वं निमेषादिर्वत्सरान्तो महीयान् तं त्वेशानं क्षेमधाम प्रपद्य इति जीव आत्मनि प्रकृते लीनत्वेन
प्रतियोग्यभावात् परिपूर्णस्वरूपेणावतिष्ठते आत्मत्वात्मस्थ एव नान्यत्र लीयते यतः केवलो निरुपाधिः अ
त एव विकल्पापायाभ्यां विश्वोत्पत्तिलयाभ्यां लक्ष्यते अधिष्ठानावधित्वेन चेतितव्यः २७ अस्य कथनस्य प्र
स्तुतोपयोगमाह एवमिति मनसः कथमेदनिमित्तो भ्रमः स्यात् जातो वा कथं हृदि तिष्ठेदिति २८ ॥ ॥

भा० ए०

१०१

उपसंहरति एवमिति २९ प्रत्यक्षमिव येनेदं दर्शितं तत्त्वमात्मनः सांख्यप्रख्यानतस्मै हरये गुरवे नमः २९ इति श्रीभागवते एकादशे चतुर्विंशः २४ पंचविंशे त्वेतेषु गुणप्रतिपत्त्यै निरूप्यते चित्तप्रभवसत्त्वादिगुणवृत्तिरत्र। कथा प्रकृतिपुरुषविवेकज्ञानवतोऽपि यावत्प्रयत्नविशेषेण गुणत्रयवृत्तिजयो न स्यात्तावत्तद्दृढोपरमः अतस्तज्जयोपायकथनाय गुणवृत्तीर्निरूपयति गुणानामिति मिश्रीभूय वर्तमानाः सम्मिश्राः न सम्मिश्रा असम्मिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं कथयतो मत्तो निबोधास्पष्टः

एवं सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः। प्रतिलोमानुलोमाभ्यां परावरदृशा मया २९ इति श्रीभा० म० ए० ध्या० भगवदुद्धवसंवादे चतुर्विंशतितमोऽध्यायः २४ श्रीभगवानुवाच गुणानामसम्मिश्राणां पुमान्येन यथा भवेत् तन्मे पुरुषवर्येदमुपधारय शंसतः १ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः २ काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखं मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः ३ क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः शोकमोहौ विषादार्ती निद्रा

२ तत्र सत्त्ववृत्तीराह शम इति ईक्षा विवेकः तपः स्वधर्मवर्तित्वं स्मृतिः पूर्वापरानुसंधानं तुष्टिर्यथालाभसंतोषः त्यागो यशीलत्वं अस्पृहा वैराग्यं श्रद्धा आस्तिक्यं ह्रीः अनुचितकर्मणि लज्जा दयादानं दयादावर्गतिरत्नणोद्धिति स्मरणात्। आदिशब्देनार्जवविनयादि स्वनिर्वृतिरात्मरतिः २ रजसो वृत्तीराह कामोऽभिलाषः ईहा व्यापारः मदो दर्पः तृष्णा लाभे सत्यप्यसंतोषः स्तम्भो गर्वः आशीः धनाद्यलाभाभिलाषेण देवतादिप्रार्थनं भिदा भेदः सुखं विषयभोगः मदोत्साहः मदेन युद्धाद्यभिनिवेशः यशः प्रीतिः स्तुतिप्रियता हास्यमुपहासः वीर्यं प्रभावाविष्कारः बलेनोद्यमः न्यायेनोद्यमः सात्त्विक एव ३ तमोवृत्तीराह क्रोध इति लोभोऽत्यपराङ्मुखता अनृतमशास्त्रीयभाषणं हिंसा द्रोहः याच्ञा प्रार्थना दम्भो धर्मध्व

राम:॥

१०१

अनुपूर्वशः क्रमेण एताः श्लोकत्रयोक्ताः वर्णितप्रायाः अन्या अप्यूह्याः इति भावः ५ विभक्तानां गुणानां वृत्तयो वर्णिताः
मिश्राणामाह सन्निपात इति त्रिभिः अहं ममेति च मतावुक्तः सर्ववृत्तिसामानाधिकरण्यप्रदर्शनात् सन्निपातत्वं अहं
शान्तः कामी क्रोधी लोभीत्यादि तथा मम शान्तिरस्ति कामक्रोधश्चास्तीत्यादि इदं बुद्धिपूर्वकः सर्वो व्यवहारश्च संनिपातका।
र्यमित्याह व्यवहार इति अत्र हेतुः मनश्च मात्राणीन्द्रियाणि च असवश्च तैः मनआदीनां सात्त्विकतामसराजस
त्वानित्यर्थः व्यवहारस्सन्निपातज इति भावः ६ असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदा अयं त्रिषु निष्ठारूपस्य

सत्वस्य रजसश्चैताः तमसश्चानुपूर्वशः वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ५ सन्निपा।
तस्त्वहमिति ममेत्युद्धव या मतिः व्यवहारः सन्निपातो मनोमात्रेंद्रियासुभिः ६ धर्मे चार्थे च का।
मे च यदासौ परिनिष्ठितः गुणानां सन्निकर्षोयं श्रद्धारतिधनावहः ७ प्रवृत्तिलक्षणे निष्ठा।
पुमान्यर्हि गृहाश्रमे स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ८ पुरुषं सत्वसंयुक्तमनुमीयाच्छ
मादिभिः कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतं ९ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः
तं सत्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा १० यदा आशिष आशास्य मां भजेत स्वकर्मभिः तं रजःप्र
कृतिं विद्यात् हिंसामाशास्य तामसं ११ ॥ सन्निपातकार्यं धर्मादीनां सत्वरजस्तमःकार्यत्वात् विषयतः सन्नि।
पातजत्वमुक्तं फलतश्च तथात्वमाह श्रद्धारतिधनानि सत्वरजस्तमोमयानि आवहतीति तथा ७ धर्मनिष्ठा।
यामेव संनिपातं दर्शयति प्रवृत्तिलक्षणा काम्यधर्मे यदा पुमान्निष्ठा भवति तथा पुमान् यदा गृहाश्रमे एव वा सक्तस्ति
ष्ठेत् अनुपश्चात्स्वधर्मं च नित्यनैमित्तिके तिष्ठेत् गुणानां सा पिंडमितिः सन्निपातः हि यस्मात् काम्यधर्मगृहास
क्तिस्वधर्मा रजस्तमःसत्वमयाः इत्यर्थः ८ तदेवं मिश्राभिश्च गुणवृत्तीः प्रदर्श्य इदानीं पुमान्येन यथा भवेदिति पद्धु
तं दर्शयति पुरुषमिति त्रिभिः ९ ॥ १० हिंसां शत्रुमरणादिकं आशास्य यो भजेत तं तामसं विद्यात् एतेन गुणैरेवं भू
तो भवतीति तात्पर्यार्थः ११ ॥ रामाय नमः ॥

ननु तथापि गुणावेशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यः जीवश्चासेवकः इति नियमः यतो मां भजेतेति वा।
अत्रोत्तरमुच्यते तत्राह सत्वमिति जीवस्यैव न मे कुतः यतश्चित्तजाः जीवोपाधौ चित्ते निष्पद्यन्ते अतो यैः स एव बध्यते की
दृशः भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः अहं त्वनासज्जमानो गुणनियंतृत्वेन स्वच्छाद्विकर्तापि
नित्यमुक्तः अतो महान्विशेषः इति भावः यद्वा भूतानामपंचीभूतानां यत्कार्यं भूतं चित्तं अन्नमयं हि सोम्य मन इ
ति श्रुतेः तन्मयत्वात् अतो भूतोपहितस्य जीवस्यैवेति अन्यत्समानं १२ तदेवं मिश्राणां मिश्रगुणकार्याणि प्रदर्श्ये
दानीमेकैकगुणोद्रेककार्याणि दर्शयति यदेतिसप्तदशभिः यदेतरौ गुणौ जयेत् अभिभवेत् भास्वरं प्रकाशकं वि

सत्वं रजस्तम इति गुणा जीवस्य नैव मे चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते १२
यदेतरौ जयेत्सत्वं भास्वरं विशदं शिवं तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् १३ य
दा जयेत्तमः सत्वं रजः संगं भिदा चलं तदा दुःखेन युज्येत कर्मणा यशसा श्रिया १४ यदा जये
द्रजः सत्वं तमो मूढं लयं जडं युज्येत शोकमोहाभ्यां निद्रया हिंसयाशया १५ यदा चित्तं प्रसी
देतेंद्रियाणां च निर्वृतिः देहेऽभयं मनोऽसंगं तत्सत्वं विद्धि मत्पदं १६ विकुर्वन्क्रियया चाधी
रनिर्वृतिश्च चेतसां गात्रास्वास्थ्यं मनोभ्रांतं रज एतैर्निशामय १७॥ शदं स्वच्छं शिवं शांतं शिवत्वं वि

शदत्वं भास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात् तदा तैर्युज्यते आदिशब्दात् शमदमादिभिश्च १३ तमश्च सत्वं च
कर्मणि तेरजः कर्तृ संगं संगहेतुः भिदां भेदहेतुः चलं प्रवृत्तिस्वभावं अतः संगहेतुत्वात् यशसा श्रिया च युज्येत तत्कामः
उभाभ्यामेवातीत्यर्थः भिदाहेतुत्वात्तद्दुःखेन युज्यते दुःखेनेति पाठे भयं भवतीति श्रुतेः चलत्वात्कर्मणा च युज्येत १४ यदा रजः
सत्वं च भृत्वा तमः कर्तृ जयेत् तमः द्वितीयं कं वंशकं लयं आवरणात्मकं जडं अनुद्यमात्मकं अतो मूढत्वाच्छोकमोहौ हिंसा
भिः लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यं जन इति पाठे लयात्मकत्वमेव निद्राशयोर्हेतुः १५ यदा उक्तमेव
किंच यदा चित्तं प्रसीदेत स्वच्छं भवेत् निर्वृतिः उपरतिः तत्तदा मत्पदं मदुपलब्धिस्थानं सत्वं विद्धि १६ यदा उक्तमेव
या विकुर्वन् विकारं प्राप्नुवन् अधीर्भवति अस्तमनादिहि धीर्यस्य सः चेतसां बुद्धीन्द्रियाणां अनिर्वृतिः गात्राणां

यदा सीदल्लितिरो भवत् चेतसो ग्रहणे चिदाकारपरिणामे अक्षमं सच्चित्तं विलीयेत मनोपि संकल्पात्मकं नष्टं लीनं
तमोऽज्ञानं ग्लानिर्विषादश्च भवति तत्तदा तमउत्कटं उपधारय विद्धि १८ किंच एधमानः इति इंद्रियाण्येव निवृत्तिप्र
वृत्तिमोहस्वभावानि देवासुररक्षांसि यद्यप्यसंगादाधिदैविकानां गुणानामुत्कर्षकार्याण्युक्तानीति ज्ञेयं १९ गु
णोत्कर्षेणावस्थाभेदं दर्शयति सत्वादिति प्रसंगान्निर्गुणावस्थामाह तुरीयं चतुर्थमवस्थांतरं नामत्रिषु जागर
णादिषु संततमेकरूपं आत्मतत्वमेवेत्यर्थः २० गुणोत्कर्षद्वारेण तत्तत्कर्मफलं निष्ठां प्रदर्शयति उपर्युपरीति

सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमं मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय १८ एध
माने गुणे सत्वे देवानां बलमेधते असुराणां च रजसि तमस्युद्धव रक्षसां १९ सत्वाज्जागर
णं विद्याद्रजसा स्वप्नमादिशेत् प्रस्वापं तमसा जंतोस्तुरीयं त्रिषु संततं २० उपर्युपरि गच्छ
ति सत्वेन ब्राह्मणा जनाः तमसाधोध आमुख्याद्रजसांतरचारिणः २१ सत्वे प्रलीनाः स्व
र्यांति नरलोकं रजोलयाः तमोलयास्तु निरयं यांति मामेव निर्गुणाः २२ मदर्पणं निःफलं वा
सात्विकं निजकर्म तत् राजसं फलसंकल्पं हिंसाप्रायादि तामसं २३ कैवल्यं सात्विकं ज्ञानं र
जो वैकल्पिकं तु यत् प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतं २४

ब्राह्मणा वेदार्थानुष्ठाननिपुणाः
आब्रह्मणः इति पाठे ब्रह्मलोकमभिव्याप्येत्यर्थः आमुख्यात् स्थावरमभिव्याप्य अंतरचारिणो मनुष्या एव भवंति २१
देहाद्युत्क्रांतिकाले न गुणोत्कर्षफलमाह सत्वे इति प्रलीनाः मृताः रजसो लयाः रजसि प्रवृद्धे सति लयो येषां ते ए
वं तमोलया इत्यपि निर्गुणाः इत्यत्र लयशब्दानुपादानाज्जीवतोपि निर्गुणाश्चेन्मामेव यांतीत्यर्थः २२ इदानीं गुणोत्क
र्षकृतमेव तत्तत्फलसाधनकर्म त्रैविध्यमाह मदर्पणमस्मीत्युद्देशेन कृतं तन्निःफलं केवलदास्यभावेनैव कृतं यन्नि
जं कर्म नित्यादि तत्सात्विकं फलसंकल्प्यते यस्मिन् तत् हिंसाप्रायं प्रहिंसोद्देशेन कृतं हिंसावहलं च आदिशब्दाद्दंभमा
त्सर्यादि कृतं च २३ इदानीं सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह कैवल्यं देहाद्यतिरिक्तात्मविषयं वैक।

॥ ९८ ॥

अधुना वासविधिमाह वनमित्यादिना वनं विविक्तत्वात्सात्त्विको वासः भगवन्निष्ठे केतनं तु साक्षात्तदाविर्भावान्निर्गुणं स्थानं २५ कारकः कर्ता असङ्गी अनासक्तः रागान्धः अत्यभिनिवेशवान् स्मृतिविभ्रष्टः अनुसन्धानशून्यः मदपाश्रयः मदेकशरणः स हि निरहंकारत्वान्निर्गुणः २६ अधर्मे धर्मबुद्ध्या श्रद्धा २७ पथ्यं हितं परिणामसुखकरं पूतं शुद्धं अनायस्तं अनायासतः प्राप्तं आहार्यं भक्ष्यभोज्यादि इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कट्वम्ललवणादि आर्तिदा अशुचि दैन्यकरमशुद्धं च चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतं २८ आत्मोत्थसुखमदपाश्रयमित्य

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते तामसं द्यूतसदनं मन्निकेतं तु निर्गुणं २५ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः २६ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा २७ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतं राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि २८ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसं तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयं २९ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि

पित्वं तत्परार्थविषयत्वेन ज्ञानवदेव द्रष्टव्यं २९ उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्रव्यमिति द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्त्विकं सुखमित्यादि कालः प्रातर्भजेत्तमो भक्त्या पदे तेजो रजः पदे सत्त्वादिनापर्यायादुक्तः ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादिकं कर्म मदर्पणमित्यादि कारकः सात्त्विकः कारकोऽसङ्गीत्यादि श्रद्धा सात्त्विक्याध्यात्मिकीत्यादि अवस्था सत्त्वाज्जागरणमित्यादि आकृतिः उपर्युपरि गच्छन्तीत्यादिनोक्ता देवतारूपा निष्ठा सत्त्वे प्रलीनाः स्वर्यान्तीत्यादिनोक्तः स्वर्गादिः एवं सर्वोऽप्ययं भावस्त्रैगुण्य एव त्रिगुणात्मकः ३० ॥ रामराः

नकेवलं एष एव किंतु भावं तः पुरुषाव्यक्ताधिष्ठिताः अधिष्ठिताः ते सर्वे भावा गुणमया एव तत्प्रपंचयति दृष्टमिति
३१ इदानीं मुक्तेः गुणमयस्य संसारहेतुत्वमनुवदंस्तन्निर्जयान्मोक्षं इत्याह एता इति सार्द्धेन येनेमे निर्जिताः सम्यक्साद
विहितेन भक्तियोगेन मन्निष्ठः सन्मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति ३२ तस्माद्विवेकिनामिदमेव युक्तमि
त्याह तस्मादिति ज्ञानविज्ञानयोः संभवो यस्मिन्तमिमं नरदेहं ३३ भजनप्रकारमाह निःसंग इति सार्द्धेन सत्वसं
सेवया सात्विकान्नवसेवेन उपमानसत्वादिव इति प्रागुक्तया नैरपेक्ष्येण उपशमात्मकेन सत्वेनैव ३४ एवं सति

सर्वे गुणमया भावाः पुरुषाव्यक्ताधिष्ठिताः दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ३१ ए
ताः संसृतयः पुंसो गुणकर्मनिबंधनाः येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः भक्तियो
गेन मन्निष्ठो मद्भावाय प्रपद्यते ३२ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवं गुणसंगवि
निर्द्धूय मां भजंतु विचक्षणाः ३३ निःसंगो मां भजेद्विद्वानप्रमत्तो जितेंद्रियः रजस्तमश्चा
भिजयेत्सत्वसंसेवया मुनिः सत्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शांतधीः ३४ संपद्यते गुणै
५२ र्मुक्तो जीवो जीवं विहाय मां ३५ जीवो जीवेन निर्मुक्तो गुणैश्चाशयसंभवैः मयैव ब्रह्मणा
पूर्णो न बहिर्नांतरश्चरेत् ३६ इति श्रीभाग० ए० पं० भगवदुद्धवसंवादे पंचविंशः

मां प्राप्नोतीत्याह संपद्यत इति जीवं जीवत्वकारणं लिंगशरीरं ३५ मां प्राप्तस्य न पुनः संसार इत्याह जीव इति
न बहिः विषयभोगेन नांतरं तत्स्मरणेन ३६ गुणाक्रान्तामुरुसंसरणप्रथामजितपुण्यकथाकथनादिभिः
धुनुत भक्तिरसेन विवेकिनो नहि पुनः सुलभं जनुरीदृशं ॥ इत्येकादशे पंचविंशः २५ ॥ ॥

यद्गुंशे योगनिष्ठस्य विघातो दुष्टसंगतः साधुसंगेन तन्निष्ठाप्यत्राकाष्ठे निवार्यते १ योगिनो योगविभ्रंशः संगतः स्य भवेदि सति सर्वथा तन्निवृत्यर्थमैलगीतं वितन्यते २ निःसंगो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः इत्युक्तं तच्च विपर्य यस्तेन कथयिष्यन् जीवन्मुक्तस्यापि तावद्दुःसंगो दुर्वार इत्यनर्थाः स्युरित्याशंक्योक्तानुवादपूर्वकं परिहरति सार्धैः मल्लक्ष णं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन् आत्मस्थं आत्मन्येव नियतं त्वे न स्थितं परमानंदरूपमात्मानं मां समुपैति सम्यक् प्राप्नोति १ न चैवंभूतस्य विषयसंगो नामास्तीत्याह गुणमय्येति

श्रीभगवानुवाच मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः आनंदं परमात्मान
मात्मस्थं समुपैति मां १ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया गुणेषु मायामात्रे
षु दृश्यमानेष्ववस्तुतः वर्तमानोपि न पुमान्युज्यते ऽवस्तुभिर्गुणैः २ संगं न कुर्यादसतां।
शिश्नोदरतृपां क्वचित् तस्यानुगस्तमस्यंधे पतत्यंधानुगांधवत् ३ ऐलः सम्राडिमां गा।
थामगायत बृहच्छ्रवाः उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ४॥

गुणमय्या जीवयोनिः जीवोपाधिस्तया विमुक्तः गुणेषु वर्तमानोपि तैर्न युज्यते संगं न प्राप्नोति अत्र हेतुः अवस्तुभिः अवस्तुभिरप्यनेन युज्य। मानाः दृश्यंते तत आह अवस्तुत्वेन दृश्यमानेषु २ तथापि संगं वर्जयेदित्याह संगमिति असतां लक्षणमाह शिश्नोदरं तर्पयं तीति शिश्नोदरतृपस्तेषां क्वचिदपि आस्तां तावद्बहूनां संगः किन्तु तस्यैकस्याप्यनुगः अनुवर्ती अंधमनु गच्छतीत्यंधस्तद्वत् ३ अत्रेतिहासमाह ऐलः पुरूरवाः सम्राट् चक्रवर्ती बृहच्छ्रवाः कीर्तिर्यस्य सः उर्वशीविरहात्प्र थमं मुह्यन् पश्चात् कुरुक्षेत्रे तया समागम्य गंधर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य लोकसंयमे शो कापगमे सति ततो निर्विण्णः सन् इमां गाथामगायतेति नवमस्कंधानुसारेणानुद्रष्टव्यम् ४॥ ॥ ॥

प्राकृतीं मोहावस्थामाह त्यक्त्वेति आत्मानं राजानं त्यक्त्वा अपवाशग्याया आत्मानं त्यक्त्वा व्रजंतीमन्वगात् घोरे इति
हे तिहये जाये मनसा तिष्ठ घोरे वचांसि मिश्रीकृणवावहै नु नौ मंत्रा अनुदितास एते मयस्करन्परतरे चनाह निश्चेव
मेत्रैविलपन् ५ वैक्लव्ये कारणमाह कामानिति वर्षाणामपायामिनी रात्रीः यांतीः अपयांतीः आगमिनीः आकृष्टचे
तनाः पस्पशः ६ तस्य गंधर्वलोके प्राप्तस्य बहुकालं उर्वशीसंभोगानंतरं निर्विण्णस्य गाथामाह द्वादशभिः तत्राद्यमिरनु
तापः प्रपंच्यते अहो इति पतामयात्मे अहोरात्ररूपाः आयुःखंडाः न स्मृताः ७ न देवाहं नाहमिति अभिनिर्मुक्तः सवि

त्यक्त्वात्मानं व्रजंतीं तां नग्न उन्मत्तवन्नृपः विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ५ का॥
मानतृप्तोनुजुषन् क्षुल्लकान्वर्षयामिनीः न वेद यांतीर्नायांतीरुर्वश्याकृष्टचेतनः ६ ऐल उ॥
वाच अहो मे मोहविस्तारः कामकश्मलचेतसः देव्या गृहीतकंठस्य नायुःखंडा इमे स्मृताः
७ नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोमुया मुषितो वर्षपूगानां बताहानि गतान्युत ८
अहो मे आत्मसंमोहो येनात्मा योषितां कृतः क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ९
सपरिछदमात्मानं हित्वा तृणमिवेश्वरं यांतीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् १० कुत
स्तस्यानुभावः स्यात्तेज ईशत्वमेव वा योन्वगछं स्त्रियं यांतीं खरवत्पादताडितः ११ ॥

रममाणो अस्तंगतः अभ्युदितो वा सूर्य इति अमुया उर्वश्या वंचितः वत खेदे उत अपि वर्षपूगानामपि गतान्यहानि न
वेदेति ८ येन संमोहेन आत्मा देहः क्रीडामृगवत् अधीनः ९ ननु शापकोपतापादिना अनुनयार्थमधीनतायुक्तैव सत्स्वन
त्वत्र नतस्त्रीत्याह सपरिछदं राज्यादिसहितं ईश्वरं चक्रवर्तिनं तृणमिव त्यक्त्वा यांतीं मयि अन्वगमं अनुगतोस्मि १०
किं च मनुगच्छतीति तमप्रभावायमिमानोऽपि वैस्याह कुतस्तस्य मे तेजो बलं खरो यथा पादताडितोपि खरीमनुगच्छ
तितद्वत् ११ ॥

राम: राम: राम: राम:

ममत्वमपि तस्मिन्न्यतिकल्पितमेवेत्याह पित्रोः किं स्वं कायः जनकत्वात् नु वितर्के भार्यायाः भोगप्रदत्वात् स्वा
त्राणपुत्रकमप्येतन्मायत्तत्वात् किं स्वामिनो वा अधीनत्वात् अग्नेर्वा अन्ते दाह्यत्वात् श्वगृध्रयोर्वा भक्ष्य
त्वात् किं वा आत्मनः तत्कृतशुभाशुभभागित्वात् सुहृदां वा उपकारित्वात् एवं यो न निश्चीयते १९ तुच्छनिष्ठे विड्
भस्मकृमित्वं निष्ठा अन्ते यस्य तस्मिन् कापि कलेवरे विषयत्वेन गृहीते विषजमेवाह अहो इति सुभद्रं शोभननासिकं २०
अन्तो गुणारोपिता रमणीयता महदशोभ्य किमिति समासाः त्वगादिसंहतौ न त्वसंघाते देहे विण्मूत्रादिसंहतौ रमतां कृमीणां

पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः किमात्मनः किं सुहृदामिति यो नावसीय
ते १९ तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियाः
२० त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ विण्मूत्रपूये रमतां कृमीणां कियदन्तरं २१
अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा २२
अदृष्टादश्रुताद्भावान्न भाव उपजायते असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः २३ त
स्मात्संगो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः विदुषां चाप्यविस्रब्धः षड्वर्गः किमु मादृशां २४
श्रीभगवानुवाच एवं प्रगायन्नृपदेवदेवः स उर्वशीलोकमथो विहाय आत्मानमात्मन्यवगम्य
मां वै उपारमज्ज्ञानविधूतमोहः २५ ॥ वा २१ यद्यप्येवं बीभत्सिता एव स्त्रियः अथापि नोपसज्जेत अवलो
कनादिनापि संगं न कुर्यात् अर्थवित् विवेकी अत्र हेतुः विषयेति २२ ननु कश्चिन्निमीलितनयनो दूरेऽपि मनःक्षोभो दृष्ट
स्तेसंसर्गोऽपि एवं दर्शनादिकं विना न भवतीत्याह अदृष्टादिति भावात् अर्थात् भावो मनःक्षोभः अतः प्राणान् इन्द्रिया
णि असंप्रयुञ्जतः नियच्छतः स्तिमितं निश्चलं सत् २३ इन्द्रियैः कृत्वा अविस्रब्धः अविश्वसनीयः मादृशां अ
विवेकिनां २४ फलितमाह एवमिति नृपदेवदेवश्च देवश्रेष्ठ इति तथा २५ ॥ रामायनमः

उक्तिभिः सहितोपदेशैः इति तीर्थदेवादिसंगादपि सत्संगः श्रेयानिति दर्शयति २६ संतो लक्षणमाह संत इति विशेषणाष्टकस्य पूर्वपूर्वं हेतुर्हेतुमद्भावः २७ न चैते उपदेशापेक्षा अपि तु केवलं तत्सन्निधिरेव तारयतीत्याह तेष्विति सार्धैः २८ श्रवणादिभिरेव मत्पराः श्रद्दधानाश्च संतो भक्तिं विंदंति २९ । ३० विभावसुमग्निं सेवमानस्य शीतं भयं तमश्चाप्येति नश्यति तथा कर्मादिजाड्यमागामिसंसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ३१ निमज्ज्योन्मज्जतामुच्चा

ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् संत एवास्य छिंदंति मनोव्यासंगमुक्तिभिः २६ संतोऽनपेक्षा मच्चित्ताः प्रशांताः समदर्शिनः निर्ममा निरहंकारा निर्द्वंद्वा निष्परिग्रहाः २७ तेषु नित्यं महाभाग महाभागेषु मत्कथाः संभवंति हि ता नृणां जुषतां प्रपुनंत्यघं २८ ता ये शृण्वंति गायंति ह्यनुमोदंति चादृताः मत्पराः श्रद्दधानाश्च भक्तिं विंदंति ते मयि २९ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते मय्यनंतगुणे ब्रह्मण्यानंदानुभवात्मनि ३० यथोपश्रयमाणस्य भगवंतं विभावसुं शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ३१ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनं संतो ब्रह्मविदः शांता नौर्दृढेवाप्सु मज्जतां ३२ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहं धर्मो वित्तं नृणां प्रेत्य संतोऽर्वाग्बिभ्यतोऽरणं ३३ संतो दिशंति चक्षूंषि बहिरर्कः समुत्थितः [illegible] देवता बांधवाः संतः संत आत्माहमेव च ३४ ॥

वचयोनीचं गच्छतां परमायनं परमाश्रयः ३२ किं च यथान्नमेव प्राणो जीवनं अहमेव यथार्तानां शरणं धर्म एव यथा प्रेत्य परलोके वित्तं तथा संत एव अर्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणं ३३ किं च संतश्चक्षूंषि सम्यग्ज्ञानानि दिशंति अर्कः पुनः सम्यगुत्थितः बहिः तदप्येकमेव चक्षुरित्यर्थः ३४ ॥ रामायनमः

यदा त्वेव वर्णिको यजेत तदा विशेषमाह यदा गर्भाष्टमैकादशद्वादशादिकाले स्वनिगमेन स्वाधिकारप्रवृत्ते
न वेदेनोक्तं द्विजत्वं उपनयने ८ अर्चायां प्रतिमादौ ९ स्नाने विशेषमाह उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः १० किं
च संध्योपासनादीनि कर्माणि आचोदितानि साकल्येन विहितानि यस्य यानि तैः सह मे पूजां कुर्वीत न तु तानि
परित्यजेदित्यर्थः सम्यक् परमेश्वरविषय एव संकल्पो यस्य तथाभूतः सन् कर्मपावनीं कर्मनिर्हारिणीं ११ अ
र्चाभेदानाह सार्द्धेन शैली शिलामयी लौही सुवर्णादिधातुमयी लेप्या मृच्चन्दनादिमयी हृदि पूजा यो मनोम

यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ८ अ
र्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजः द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ९
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना १० संध्यो
पास्त्यादिकर्माणि वेदेनाचोदितानि मे पूजां तैः कल्पयेत्सम्यक्संकल्पः कर्मपावनीं
११ शैली दारुमयी लौही लेप्या लेख्या च सैकती मनोमयी मणिमयी प्रतिमाष्टविधा
स्मृता १२ चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरं उद्वासावाहने न स्तः स्थिरायामुद्ध
वार्चने १३ अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयं स्नपनं त्वविलेप्यायामन्यत्र परिमार्ज
नं १४ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि १५

यी १२ प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा मे जीवस्य भगवतो मन्दिरं यद्वा प्रतिष्ठायाः कलान्यासेन भगवन्मन्दि
रं भवति प्रतिमा भेदेन विशेषमाह सार्द्धेन उद्वासो विसर्जनं १३ अस्थिरायामर्चने विकल्पः शालग्रामेन कुर्वीत सै
कतायां कुर्यात् अन्यत्र कुर्याद्वा न वेति अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायां अन्यत्र विलेप्यायां च परिमार्जन
मेव १४ इदानीं सकामनिष्कामभेदेन विशेषमाह द्रव्यैरिति प्रकर्षेण सिद्धैः सुशोभनैः अमायिनो निष्कामस्य भ
क्तस्य तु यथालब्धैः यत्र चन्दनादिभिः सर्वथालाभे तत्र हृदि भावेन भावनया पयः हृदि चेत मद्यागः तदा भा

अधिष्ठानभेदेन प्रधानोपचारमाह स्नानेति तत्त्वविन्यासः यथास्थानमंगप्रधानदेवतानां तत्तन्मंत्रैः स्थाप
नं १६ अभ्यर्हणं उपस्थानार्घ्यादिः सलिलादिभिस्तर्पणादिना यजनं सर्वत्र साधारणमाह श्रद्धयेति १७।१८ एवमधि
कारादिव्यवस्थामुक्त्वा इदानीं पूजाप्रकारमाह शुचिरिति संभृताः संभाराः पूजासाधनानि येन सः प्राक्दर्भैः यद्वा प्रा
गेव संभृतसंभारः सन्नासीनः तत्रासीनः सन् [illegible] पर्ववारंवारमुत्तिष्ठेदित्यर्थः प्रागुदग्वा उदङ्मुखो वा ।
आसीनः अर्चायां तु स्थिरायां तु संमुखः अर्चाभिमुख एव तिष्ठेत् सन् १९ अनेन तत्र गुर्वादिनमस्कारपूर्वकं यथोपदे

स्नानालंकरणं प्रेष्ठमर्चायामेव तु द्वयं स्थंडिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः १६ सू
र्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः श्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्यपि १७ भू
र्यप्यभक्तोपहृतं न मे तोषाय कल्पते गंधो धूपः सुमनसो दीपोन्नाद्यं च किं पुनः १८ शुचिः
संभृतसंभारः प्राक्दर्भैः कल्पितासनः आसीनः प्रागुदग्वार्चेदर्चायामथ संमुखः १९ कृ
तन्यासो मदर्चां पाणिनामृजेत् कलशं प्रोक्षणीयं च यथावदुपसाधयेत् २० तदद्भिर्देवयज
नं द्रव्याण्यात्मानमेव च प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् २१ पाद्यार्घ्याचमनी
यार्थं त्रीणि पात्राणि दैशिकः हृदा शीर्ष्णाथ शिखया गायत्र्या चाभिमंत्रयेत् २२ पिंडे वाय्वग्नि
संशुद्धे हृत्पद्मस्थां परां मम अण्वीं जीवकलां ध्यायेन्नादांते सिद्धभाविताम् २३

प्रोक्षणमिति कृतन्यासः कृ
तो मूलमंत्रन्यासो यस्यां तां मम अर्चां आमृजेन्निर्माल्यापकर्षणादिना शोधयेत् कलशं प्रोक्षणीयं प्रोक्षणीपात्रं च
पीठं कलशं उपसाधयेत् चंदनपुष्पादिभिः संस्कुर्यात् २० तदद्भिः प्रोक्षणीयाद्भिः देवयजनं देवपूजास्थानं पाद्यार्घ्यार्थं त्रीणि पा
त्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् तत्र पाद्यादिद्रव्याणि पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्तादिभिः स्यात् गंधपुष्पा ।
क्षतयवकुशाग्रतिलसर्षपाः दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकम् जातीलवंगकं [illegible] लैर्मतमाचमनीयकं [illegible] २१ तानि च त्रीणि
पात्राणि यथाक्रमं हृदयादिमंत्रैर्गायत्र्या च मंत्रयेत् अभिमंत्रयेत् दैशिकः पूजकः २२ तदनेनं पिंडे देहे वाय्वग्निसंशुद्धे इति कोष्ठगतेन
वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचंद्रमंडलामृतप्लावनेनाप्लुते मये जाते तस्मिन् हृत्पद्मस्थां परां [illegible]

तथा लक्ष्मतया स्वेनैव भावेन चिंतितया अमृतमयेन पिंडे दीपेन समं पादम् हृमिव आत्मसनिनक्षितेत्वाद्दीमानसे
रूपचारैः संपूज्य तन्मयः सन् वीरिद्यावाह्य स्थापनमुद्रया स्थापयित्वा उभाभ्यां संपूजयेत् २४ कर्पूजयेत्तदा
हृत्पाद्येति द्वाभ्यां धर्मादिभिर्भिसहासने तत्र पद्मचक्रं कल्पयित्वा भाभ्यां वेदतंत्राभ्यां उभयसिद्धये मंत्रैः पाद्यादीनुपचारा
न्प्रकल्पयेदित्यन्वयः उपस्पर्शः आचमनं अर्हणमर्घ्यं २५ उभयसिद्धये वेदतंत्रोक्तभुक्तिमुक्तिप्राप्तये अन्वयः
धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यंकस्याग्नेयादिचतुष्कोणेषु पादाः अधर्मादीनि पूर्वादिदिक्षु गात्राणि त्रयोगु

तथा लक्ष्मतया पिंडे न्यासे संपूज्य तन्मयः आवाह्यार्चादिषु स्थाप्य न्यस्तांगं मां प्रपूजये
त् २४ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् धर्मादिभिश्च नवभिः कल्पयित्वासनं
मम २५ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलं उभाभ्यां वेदतंत्राभ्यां मह्यं तूभय
सिद्धये २६ सुदर्शनं पांचजन्यं गदासीषुधनुर्हलान् मुसलं कौस्तुभं मालां श्रीवत्सं चा
नुपूजयेत् २७ नंदं सुनंदं गरुडं प्रचंडं चंडमेव च महाबलं बलं चैव कुमुदं कुमुदेक्ष
णं २८ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् स्वे स्वे स्थाने त्वभिमुखान् पूजये

णाः पद्मिकाः तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशाना अनुग्रहेति नव श
क्तयः तावत्पर्यो पदेशः धर्मादिभिर्नवभिश्च शक्तिरासनं कल्पयित्वेति कर्णिकायाः केसरे तत्र स्यष्टयोर्दिमंड
ले ज्वलमित्यन्वयः २६ आयुधादिपूजामाह सुदर्शनमिति त्रिभिः तत्र न्यस्तांगमित्यंगावरणपूजा सूचिता आ
सनेनैव शक्त्यावरणमप्युक्तं ततः सुदर्शनादिमुसलांतान्यायुधान्यष्टदिक्षु कौस्तुभमालाश्रीवत्सानुरसि २७ नं
दादीनष्टौ द्वारपालान् दिक्षु गरुडं पुरतः २८ दुर्गादीन् कोणेषु गुरून् वामतः सुरानिंद्रादीन् लोकपालान्पूर्वादिदिक्षु आ
वमेनान्ते अभिमुखान्प्रोक्षणादिरर्घ्यादिभिः पूजयेदित्यन्वयः २९ ॥

पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तं तानेव गुणविधिभिः प्रपंचयति चंदनेति षड्भिः ३० मंत्रानाह स्वर्णधर्मानुवाकः
सुवर्णधर्मं परिवेदवेनमिन्द्रस्यादि महापुरुषविद्या जितंते पुंडरीकाक्ष नमस्ते विश्वभावन सुब्रह्मण्य नमस्तेऽस्तु महापु
रुषपूर्वजेति पौरुषं सूक्तं सहस्रशीर्षेत्यादिनी राजनादीनि सामानि इंद्रं नरो नेमधिता हवन्त इत्यस्याम् चितो
तानि आदिशब्देन रोहिण्यादीनि ३१ वस्त्राद्युपचारेषु अलंकारलक्षणं विधत्ते वस्त्रेति पत्राणि कपोलवक्षःस्थ
लादिषु लिखिताः पत्रभंगप्रमुद्गतप्रमत्प्रमयथा भवति तथा यथोचितमलंकुर्वीत सुक्तापि सर्वसाधारणं ३२

चंदनोशीरकर्पूरकुंकुमागुरुवासितैः सलिलैः स्नापयेन्मंत्रैर्नित्यदा विभवे सति ३० स्व
र्णधर्मानुवाकेन महापुरुषविद्यया पौरुषेणापि सूक्तेन सामभी राजनादिभिः ३१ व
स्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितं ३२ पाद्य
माचमनीयं च गंधं सुमनसोऽक्षतान् धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ३३ गु
डपायससर्पींषि शष्कुल्यापूपमोदकान् संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ३४
अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनं अन्नाद्यगीतनृत्यानि पर्वणि स्युरुतान्वहं ३५
विधिना विहिते कुंडे मेखलागर्तवेदिभिः अग्निमाधाय परितः समूहेत्पाणिनोदितं ३६ ॥

म२

अन्वहं लक्षणं गुणं विधत्ते पाद्यमिति ३३ नैवेद्ये विभवलक्षणं गुणं विधत्ते गुडपायसेति शष्कुल्यः तैलपक्वविशेषाः
आपूपाः अपूपानां मंडकादीनां समूहाः सूपाः व्यंजनानि सति विभवे इति शेषः ३४ कालभेदेन गुणं विधत्ते अभ्यं
गेति अभिषेचनं पंचामृतादिस्नपनं अन्नाद्येति अन्नं भोज्यं आद्यं भक्ष्यं चतुष्प्रकारं शादौ अन्वहं प्रत्यहं वा विभवे
सतीति ३५ फलमनपेक्षमाणस्यापि नो ग्नावपि पूजाप्रकारमाह विधिनेति स्वगृह्योक्तप्रकारेण मेखलादिभिरुपल
क्षिते विहिते निर्मिते तदुक्तं विस्तारो घायतस्त्रिमेखला अंगुलाः हस्तमात्रो भवेद्गर्तः सयोनिर्वेदिकान्वि
तारितु इति प्रज्वलितमग्निं परितः समूहेत् एकत्र मेलयेत् ३६ ॥ ॥ ॥ ॥

दर्भैः परिस्तीर्य परितः प्रोक्षयेत् अन्वाधाय अन्वाधानसंज्ञकव्याहृतिभिः समिन्धनं पारिभाषिकं कर्म कृत्वा अग्नेरुत्तर
तो दक्षिणतो होमोपयोगीन्यासादनीयानि प्रोक्षणपात्रेण प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ मां ध्यायेत् ३१ शंखचक्रादिभिः शो
भितः शोभमानाश्चत्वारो भुजा यस्य तम् ३२ स्फुरंति किरीटादीनि यस्य तं ३३ हविषा घृतेन अभिघृतानि संसि।
क्तानि दारूणि समिधः प्रास्य प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्त्वा तदर्थाः आहुतीर्दत्त्वेत्य
र्थः तत्राघारौ प्रजापतये स्वाहा इंद्राय स्वाहेति चोत्तरदक्षिणपरिधिसंधिमारभ्याग्निमध्यात् परिधौ तत्र हारणा

परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि प्रोक्षणपात्रसाधनं कृत्वाग्नौ प्रोक्ष्याग्नौ भावयेत्तमो ३१
तप्तजांबूनदप्रख्यं शंखचक्रगदांबुजैः लसच्चतुर्भुजं शांतं पद्मकिंजल्कवाससं ३२ स्फुर
त्किरीटकटककटिसूत्रवरांगदं श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनं ३३ ध्यायन्न
भ्यर्च्य दारूणि हविषाभिघृतानि च प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ३४ ॥ जु
हुयान्मूलमंत्रेण षोडशर्चावदानतः धर्मादिभ्यो यथान्यायं मंत्रैः स्विष्टकृतं बुधः ३५ अ
भ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् मूलमंत्रं जपेद्ब्रह्म स्मरन्नारायणात्मकं ३६ ॥

रूपौ आज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत्येवं होमरूपौ ३४ मूलमंत्रेण अष्टाक्षरेण तथा षोडशर्चा चोपनि
न्तेन पुरुषसूक्तेन च अवदानतः अवत्तं चमाहुतिग्रहणेनेत्यर्थः पुरुषसूक्तेनाराधनपद्धतेः एवं मूलमंत्रः तेनैव प्र।
त्यृचमवदानतो होमः इति मंत्रैः स्वाहांतैर्नाममंत्रैर्यथान्यायं प्रजाक्रमेणैव अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च
हुत्वा ३५ ततो बहिःस्थं भगवंतमभ्यर्च्य अथ नमस्कृत्य पार्षदेभ्यो नंदादिभ्यो अष्टभ्यो दत्त्वा बलिं हरेत् ततः [illegible] ॥
नमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमंत्रं जपेत् ३६ ॥

तं २

ततः अथ पश्चात् भगवतो भोजनसमाप्तिं ध्यात्वा आचमनं दत्वा उच्छेषं विष्वक्सेनाय कल्पयित्वानन्तरं तत्पश्चात्स्वयं
भुञ्जीत ततः सुरभिमत् सुगन्धवत् ताम्बूलाद्यं मुखवासं दत्वा अथ पुनरपि अर्हयेत् पुष्पाञ्जलिना पूजयेत् ६३ अभिन
यन्स्वचेष्टयाविष्कुर्वन् क्षणिकः वैराग्यं परित्यज्य लब्धावसरो भवेत् ६४ स्तवस्तोत्राणां भेदं दर्शयति पौराणैः प्रा
कृतैरिति ६५ कथं प्रणमेदित्यपेक्षायामाह शिर इति बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं समं दक्षिणोत्तरौ पादौ गृही
त्वापद्मापक्षतः परस्परं विबद्धाभ्यां हस्ताभ्यां पराभवः प्रपन्नमित्यादि विज्ञप्त्या च प्रणमेत् ६६ ततः शेषाग्रहणपूर्वं

दत्वाचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत् ६३
उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम मत्कथाः श्रावयञ्छृण्वन् मुहूर्तं क्षणिको भवेत्
६४ स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ६५
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परं प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ६६
इति शेषां मया दत्तां शिरस्याधाय सादरं उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ६७ अर्चा
दिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् सर्वभूतेष्वात्मनि च सर्वात्माहमवस्थितः ६८ एवं क्रि।
यायोगपथैः पुमान्वैदिकतान्त्रिकैः अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सितां ६९ ॥

कं वैकल्पिकोद्वासनप्रकारमाह इति अनयैव प्रार्थनया शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय ध्यात्वा यद्युद्वास।
येत् तर्हि प्रतिमायां यन्मत्तेजोज्योतिस्तत्पुनरपि हृत्पद्मस्थज्योतिष्येवोद्वासनीयं ६७ एतेष्वधिष्ठानेषु किं मुख्यमित्य
पेक्षायामाह अर्चादिष्विति यदा यत्र श्रद्धा तदा तत्र तत्राधिष्ठाने मुख्यामुख्यत्वं कुतः यतः सर्वभूतेष्विति ६८ ॥
उभयतः इहामुत्र च ६९ ॥ ॥ ॥ ॥

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च १॥७॥

समर्थ्यमाह मदर्चामिति त्रिभिः पुष्पोद्यानानि च कारयेत् पूजायात्रोत्सवाश्रितान् पूजा प्रसिद्धा यात्रा विशिष्टव
बीणावद्यजनसमागमः उत्सवः वसन्तादिमहोत्सवः तदाश्रितान् ५० क्षेत्रादीन् दत्त्वा पूजायात्रोत्सवाश्रिता
नित्यस्य विवरणं पूजादीनां प्रवाहार्थं संततानुवृत्त्यर्थं मत्सार्ष्टितां मत्समानैश्वर्यं ५१ प्रतिष्ठादीनां व्यस्तसमस्ता
नां फलमाह प्रतिष्ठयेति मत्साम्यतां मया साम्यमित्यर्थः ५२ सकामे प्रत्युक्ते अहैतुके भक्तं प्रत्याह मामेवेति अ
हैतुक भक्तियोगः कथं भवतीति तत्राह भक्तियोगमिति ५३ दातुः फलमुक्तं अपहर्तारं निंदति यइति विड्भुक् विष्ठाभोजी।

मदर्चां संप्रतिष्ठाप्य मंदिरं कारयेद्दृढं पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ५०
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहं क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ५१
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयं पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ५२
मामेव नैरपेक्ष्येण भक्तियोगेन विंदति भक्तियोगं स लभते एवं यः पूजयेत मां ५३ यः स्वद
त्तां परैर्दत्तां हरेत सुरविप्रयोः वृत्तिं स जायते विड्भुक् वर्षाणामयुतायुतं ५४ कर्तुश्च सारथे
र्हेतोरनुमोदितुरेव च कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलं ५५ इति श्रीभागवते एकादशस्कं
धे सप्तविंशः २७ श्रीभग० परस्वभावकर्माणि यः प्रशंसति निंदति स आशु भ्रश्यते स्वार्थादस

त्यभिः ५४ कर्तुर्यत्फलं तदेवान्येषामित्याह कर्तुरिति सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुश्च प्रे
त्य तत्फलमित्यन्वयः कुतः यतः कर्मणामेभागिनः भागार्हाः तत्रापि विशेषमाह भूयसि कर्मणि सारथ्यादौ च भूयः
अधिकं फलमिति ५५ यथः पत्रादिमात्रेण पूजितोऽथ यः परं पदं प्रागेवादिशति प्रीतः स कृष्णः शरणं मम ॥ इत्येका
दश सप्तविंशः २७ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ज्ञानयोगः पुनस्तं तु समासेन निरूप्यते १ इदा
नीमतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह परेत्यादि स्वभावान् शांतघोरादीन् कर्माणि च धर्माधर्मादीनि न प्र
शंसेत् न च निंदेत् तत्र हेतुः विश्वमिति २ विपक्षे दोषमाह [illegible]

॥ उपपत्तिरोधमाह परेति सार्द्धेन ज्ञाननिष्ठालक्षणात् असति मिथ्याभूते द्वैते मिलितेऽपि शान्ते २ अर्थमेव दृष्टांते-
नोद्दर्शयति तैजसे राजसाहंकारकार्ये इंद्रियगणे निरूप्यापन्ने अभिभूते सति पिंडस्थो जीवः केवलं मनो।
मात्रेण मायां स्वप्नरूपां प्राप्नोति ततो मनसि लीने सति नष्टचेतनः सन् मृत्युं वा मृत्युतुल्यां वा सुषुप्तिं प्राप्नोति
यथा तद्वद्देव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोतीति यथा प्राज्ञसंपर्कात् विश्वस्य भोगहेतुर्लय-
णोंऽशः एवमनात्मसंपर्कात् आत्मनोऽपि स्वरूपभ्रंशाद्गतिभावः ३ द्वैतासत्त्वतयास्तुतिनिंद्ये निर्विषयत्वमप-

तैजसे निद्रयापन्ने पिंडस्थो नष्टचेतनः मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक्पुमान् ३
किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् वाचोदितं तदनृतं मनसा ध्यातमेव च ४ छायाप्र-
त्याह्वयाभासा ह्यसंतोऽप्यर्थकारिणः एवं देहादयो भावा यच्छंत्यामृत्युतो भयं ५ आत्मैव तदि-
दं विश्वं सृज्यते सृजति प्रभुः त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ६ तस्मान्न ह्यात्मनो-
ऽन्यस्मादन्यो भावो निरूपितः निरूपितेऽयं त्रिविधा निर्मूला भातिरात्मनि ७ इदं गुणमयं वि-
द्धि त्रिविधं मायया कृतं एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणं न निंदति न च स्तौति लोके चर

चयति सार्द्धैः षड्भिः किं भद्रमिति अवस्तुनो द्वैतस्य मध्ये किं भद्रं किं वाभद्रं कियद्भद्रं कियद्वाभद्रमित्यर्थः अवस्तुत्वमेवाह।
वाचेति वाचेंद्रियेणोपलक्षणं वाचा उदितं उक्तं चक्षुरादिभिश्च यद्दृश्यं तदनृतमिति ४ नन्वेवं सति देहादिभावानामप्यसत्त्वा-
त्कथं भयहेतुत्वं तत्र सदृष्टांतमाह छाया प्रतिबिंबः प्रत्याह्वयः प्रतिध्वनिः आभासः शुक्तिरजतादिः एते यथाऽसंतोऽप्य-
र्थकारिणो भवंति आमृत्युतः मृत्युमभिव्याप्य यद्वा मृत्युर्लयः यावन्नैव लीयते तावद्भयं ददतीत्यर्थः ५ ननु सृष्ट्या-
दिश्रुतिरेवं द्वैतं निरूप्यते कथमसत्यं स्यात्तत्राह आत्मैवेति द्वाभ्यां त्रायते पाल्यते त्राति पालयति ६ अन्यस्मात्सृ-
ज्यादिव्यतिरिक्तात् त्रिविधा आध्यात्मादिरूपा भातिः प्रतीयते ७ ननु कथं निर्मूला प्रतीयते तत्राह इदमिति ज्ञा-
नविज्ञानयोर्नैपुणं निष्ठां सूर्यवत्समो भूत्वा ८ ॥ ॥ ॥ ॥

एतन्निष्ठा साम्युपायमाह प्रत्यक्षेणेति पदार्थमाद्यन्तवत् देहं तदसत् इति ज्ञात्वा निःसंगो विचरेत् आद्यन्तवत्वे प्रमाणानि प्रत्यक्षेण घटादि अनुमानेन सावयवत्वेन दृश्यत्व पित्राद्विनिगमेनाऽप्रत्यक्षमाकाशादि आत्मसंविदा स्वानुभवेन सर्वं दृश्यमाद्यन्तवदसच्चेति ज्ञात्वेति ९ ननु यद्यात्मसंविदा सर्वं दृश्यमसदित्युच्यते तर्ह्यात्मा स्वप्रकाशो देहादि द्वैतं च जडं इत्युक्तं स्यात् तथा च संसारप्रतिभासो न घटेतेति चोदयति नैवेति अनात्मस्वदृशोर्जडाजडयोः अत्र हेतुः द्रष्टृदृश्ययोः मा भूत् द्वयोरपि तत्राह तु उपलभ्यत इति १० एतत्प्रपंचयति आत्मेति अव्ययत्वादिपं

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा आद्यन्तवदसज्ज्ञात्वा निःसंगो विचरेदिह ९ उद्धव उवाच नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते १० आत्माव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ११ श्रीभगवानुवाच यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणं संसारः फलवांस्तावदपार्थोप्यविवेकिनः १२ अर्थे ह्यविद्यमानेपि संसृतिर्न निवर्तते ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा १३ ॥

न विशेषणैरौनीशादिरागादिशून्यत्वम् ज्ञानपरिच्छेदानामसंभवं दर्शयति हेतुहेतुमत्वेनुरूपेषु अचिज्जडः अयं भावः यथैवाग्निदारुणोर्भेदेनानुपलंभेपि दारुप्रकाश्यमेव अग्निश्च प्रकाशकः तथा देहात्मनोरपीति न संसृतिस्तयोरन्यतरस्योपि घटत इति ११ सत्यं तथाप्युभयोरेवमविवेक एव संसारात्लवनमित्याह यावदिति सन्निकर्षणं संबंधः नन्वसंगस्य कुतः संबंधः तत्राह अविवेकिनः अज्ञानकृत इत्यर्थः ननु स्वप्रकाशस्य कथमज्ञानमतः संसारः तत्राह अपार्थोपि मिथ्याभूतोपि केवलं फलवान् फलस्फूर्तिः ननु तत्वनोस्तीत्यर्थः १२ नन्वसतो देहादेः कुतः संसारस्फूर्तिर्हेत्वैतुल्यमपि तत्राह अर्थे ह्यविद्यमानेपीति अस्यात्मनः १३ ॥ ॥ ॥ ॥

ननु कथं विज्ञानतो विषयस्मृतिर्जीवन्मुक्तस्यापि दुर्वारेत्यनिर्मोक्षप्रसंगः स्यात्तत्राह यथाहीति प्रस्वापः स्वप्नः बहू
नर्थान्बिभर्ति पुष्णातीति तथा १४ अहंकारस्य देहादिसन्निकर्षादेव संसारो लेवनमित्यन्वयव्यतिरेकाभ्यांद
र्शयति शोकेति सुषुप्तादौ तेषामदर्शनाद्देहं सुखीतिवच्चेतनं मे सुखीति प्रतीत्यभावाच्च दृश्यत्वाच्च सुखादीनामहंकारध
र्मत्वादिवत् दृश्यधर्मत्वानुपपत्तेरिति भावः १५ ननु यद्यहंकारस्य संसारस्तर्हि मुक्तिरपि तस्यैवेति मुक्तावहंकाराव
शेषः प्रसज्येत तत्राह देहादेर्देहीत्यभिमानो यस्य सः आत्मैव तेषां मतः हितो जीवः अत एव गुणकर्ममयी मूर्तिर्य।

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बहूनर्थभृत् स एव प्रतिबुद्धस्य न वै मोहाय कल्पते १४ शोकह
र्षभयक्रोधलोभमोहस्पृहादयः अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः १५ देहेन्द्रियप्रा
णमनोऽभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः सूत्रं महानित्युरुधेव गीतः संसार आधावति
कालतन्त्रः १६ अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ज्ञानासिनोपासनया
शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः १७ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथा
नुमानं आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये १८ ॥ सूत्रः एवं सूत्रोपाधिभिर्बहुधैव सू

त्रादिशब्दैर्गीतः संसारे परमेश्वराधीनः सर्वतो धावति अतो नायं दोष इति भावः १६ तदेवमहंकारकृतं बन्धमुपपाद्येदानीं
ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह अमूलमिति वस्तुतो मूलशून्यं अज्ञानतस्तु बहुभिरूपैः रूपितं प्रकाशितं इन्द्रजालिक
तुल्यमिति वा किं तत् तदाह मन इति मनआदीनां द्वन्द्वः यद्वा मनआदिषु क्षिप्तं इति कर्म अहंकरणं गुरूपासनया नि
शितेन ज्ञानखड्गेन छित्त्वा १७ तदेवं ज्ञानं स्वरूपसाधनफलैर्निरूपयति ज्ञानमिति विवेको ज्ञानं तत्साधनान्याह निगमो वे
दः तपः स्वधर्मः प्रत्यक्षं स्वानुभवः ऐतिह्यमुपदेशः अनुमानं तर्कः फलमाह आद्यन्तयोरस्य जगतः मध्येऽपि तदेव केव
लेन नु जगदिति किं तत् कालः कलयति प्रकाशयतीति यः तथा हेतुः कारणं च यत् तदेव एतदुक्तं भवति यदस्य विश्वस्य का
रणं प्रकाशकं च ब्रह्म तदात्मकमेवैतत् ततः प्रपञ्चमिथ्यात्वे विनिश्चयफलो निगमादिसाधनैर्जायते यो विवेकः तज्ज्ञानमि

तत्र नानाभेदव्यवहारालंबनस्यापि विश्वस्य कारणमात्रात्मकत्वे दृष्टांतमाह यथेति सुवर्णं तं सुवर्णं कुंडलादिरूपेण।
विरचितं यद्धिरण्यं पश्चात्कीदृशं हिरण्मयस्य कुंडलादे रूपस्योत्पत्तेः पुरस्तान्नाशाच्च पश्चाद्यदस्तिकटककुंडलमित्यादिना।
नाम्नाव्यपदेशैर्व्यवहारं प्राप्यमाणमपि तदेव यथा तद्वदस्य विश्वस्य कारणमतोऽहमेव नानाव्यवहारालंबनं नतु मतः पृ।
पृथग्विधमिति १९ तदेवं कार्यस्य कारणमात्रात्मकतामुक्त्वा प्रकाश्यस्य प्रकाशकात्मतामाह विज्ञानमिति त्र्यवस्थ्य
यकारस्य पृथक्प्राढः छि दोनुरोधेन जाग्रदादित्र्यवस्थं यद्धि ज्ञानं मनः तदवस्थाकारणमतं तच्च यद्गुणत्रयं यच्च कारण
कार्यकर्तृ कारणमध्यात्मं कार्यमधिभूतं कर्तृ अधिदैवं वा एवं गुणत्रयकार्यभूतं दिविजगत एतद्येन तुर्येण सामान्ये

यथा हिरण्यं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य तदेव मध्ये व्यवहार्यमाणं नानाप
देशैरहमस्य तद्वत् १९ विज्ञानमेतत्त्र्यवस्थमंग गुणत्रयं कारणकार्यकर्तृ समन्वयेन व्य
तिरेकतश्च येनैव तुर्येण तदेव सत्यं २० न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेश।
मात्रं भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा २१॥ ज्ञानमात्रेण समन्वयेन भवतीत्येन्ना
नुगतं प्रकाशात इत्यर्थः तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति तथा चक्षुषश्चक्षुरुत श्रोत्रस्य श्रो
त्रं मनसो यन्मनो विदुरित्यादि श्रुतेः ननु विशेषविज्ञानव्यतिरेकेण न तुर्यं नाम उपलभामहे तत्राह व्यतिरेकतश्च समा
ध्यादौ यद्दृष्टितदेव सत्यमिति २० एवं कालत्रयेप्यव्यभिचारिणः सत्यत्वमुक्त्वा व्यभिचारिणश्चासत्यतामाह न यदिति।
मध्ये च तन्न तत्पृथगस्ति किंतु व्यपदेशमात्रं कुतः यतः यद्यत्परेण अन्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत्तत् तदेव का
रणप्रकाशकं तावन्मात्रं स्यान्न पृथगिति मे मनीषा बुद्धिः वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं सर्वं ख
ल्विदं ब्रह्मेत्यादि श्रुतेः कारणप्रकाशकव्यतिरेकेण च कार्यस्य प्रकाश्यस्य चानुपलंभादिति भावः २१ ॥ ॥

एवं सामान्यतः कार्यप्रकाशकयोः कारणप्रकाशकाभ्यां भेदमुपपाद्य प्रस्तुतेन दृश्यविवेकपूर्वकं प्रपंचस्य त्व्या
भेदमाह अविद्यमान इति यो यं वैकारिको विकारसमूहः स एव प्रागविद्यमानो राजससर्गः रजोद्वारेणोत्पन्न एको
यं भूत इत्यर्थः अवभासते यस्त्वप्रकाशकत्वेनार्थः ब्रह्म तु स्वयं स्वतः सिद्धं न तु कार्यमित्यर्थः ज्योतिश्च प्रकाशक-
मित्यर्थः अतः कारणानि इंद्रियाणि च अर्थास्तन्मात्राणि च आत्मा मनश्च देवानामप्युपलक्षणं विकाराः पंच-
भूतानि एवं चित्रं ब्रह्मैव भातीति २२ उपसंहरति एवमिति मनसः प्रत्यक्षेति स्वनुमानैः स्फुटं यथा भवति तथा ब्र-
ह्मविवेकहेतुभिः तथा परस्य देहादेरपवादेन आत्मत्वनिरासेन च कीदृशेन विशारदेन निपुणेन गुरुणा निमि-

अविद्यमानोप्यवभाति यो वैकारिको राजससर्ग एषः। ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मे-
न्द्रियार्थात्मविकारचित्रं २२ एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन छि-
त्वात्मसंदेहमुपारमेत स्वानंदतुष्टोऽखिलकामुकेभ्यः २३ नात्मा वपुः पार्थिवमिंद्रिया-
णि देवा ह्यसुर्वायुर्जलं हुताशः। मनोन्नमात्रं धिषणा च सत्त्वमहंकृतिः खं क्षितिरर्थ-
साम्यं २४ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः विक्षिप्यमाणैरु-
त किं नु दूषणं घनैरुपेतैर्विगतै रवेः किं २५॥

तस्कृतेनेति वा आत्मविषयसंदेहं छित्त्वा स्वानंदतुष्टः सन्न-
खिलेभ्यः कामुकेभ्यः इंद्रियादिभ्य उपारमेत निःसंगो भवेत् २३ परापवादं प्रपंचयति वपुरात्मा न भवति पार्थिव-
त्वात् घटवत् तथा इंद्रियाणि तदधिष्ठातारो देवा असुर्मनः धिषणा बुद्धिः सत्त्वं चित्तं अहंकृतिरिति एते आत्मा न भ-
वंति कुतः अन्नमात्रं अन्नोपष्टंभत्वात् शरीरवत् वायुर्जलं च हुताशस्तेजः खं क्षितिरिति पंचभूतानि अर्थाः शब्दा-
दयः साम्यं प्रकृतिश्च नात्मा जडत्वात् घटवदिति यद्वा हि शब्देनानुमानानि सूचितानि तद्यथा इंद्रियाण्यात्मा न
भवंति करणत्वात् मनोवत् प्राणश्च वायुत्वात् बाह्यवायुवदिति २४ एवं विवेकज्ञानवतो मुक्तस्य नेंद्रियादिकृतो गु-
णदोषसंबंध इत्याह समाहितैरिति मत्सु विविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य प्रकाशकस्य

श्री०ए०

११३

असंगत्वेनावस्थितस्य न केपि गुणदोषाः स्युः काशदृष्टान्तेनाह यथेति वाय्वादीनां शोषणदाहनक्लेद
नरजोधूसरत्वादिभिर्गतागतैरागमापायिभिः ऋतुगुणैः शीतोष्मादिभिर्वा अहंमतेः अहंकारात्परम्।
क्षरं सत्वादिमलैः संसृतिहेतुभिर्न युज्यते यद्वा अहंकारस्य संसृतिहेतुभिरिति २६ मुक्तवत्सम्यक्ज्ञानी न यथेष्टमाचरेदि
त्याह द्वाभ्यां तथापीति गुणेषु विषयेषु रजो रागः मनसः कषाय इति दुर्निरासतामाह २७ एतदेव दृष्टान्तेनोपपा
दयति यथेति नृणामामयो रोगः असाधु असम्यक् यथा भवति तथा अपक्वकषायकर्म अदग्धाः कषाया रा

यथा नभो वाय्वनलांबुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते तथाक्षरं सत्वरजस्त
मोमलैरहंमतेः संसृतिहेतुभिः परं २६ तथापि संगः परिवर्जनीयो गुणेषु माया
रचितेषु तावत् मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनः कषायः २७ यथामयो
साधुचिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् एवं मनोऽपक्वकषायकर्म कु
योगिनं विध्यति सर्वसंगं २८ कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥
ते प्राक्तनाभ्यासबलेन भूयो युंजंति योगं न तु कर्मतंत्रं २९ करोति कर्म क्रियते च जंतुः के ॥
नाप्यसौ चोदित आनिपातात् न तत्र विद्वान् प्रकृतौ स्थितोपि निवृत्ततृष्णः स्वसुखानुभूत्या

गरूपः तन्मूलानि कर्माणि च यस्मिंस्तत् अत एव सर्वसंगं सर्वेषु पुत्रादिषु सज्जमानं मनः कुयोगिनं असम्यग्ज्ञानिनं वि
ध्यति भ्रंशयति २८ ननु कथंचित् विषयसंगे पुनर्योगभ्रंशः स्यात् अलं तर्हि सोपायेन योगमार्गेणेत्यत आह कुयोगिन इति
मनुष्यभूतैर्बन्धुशिष्यादिरूपैः त्रिदशैरुपसृष्टैः तथा च श्रुतिः यस्मान्न देवानां प्रियं यदेतन्मनुष्या विद्युरिति भू
यो जन्मान्तरे न तु कर्मतंत्रे कर्मविस्तारे २९ ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत्रा
त आह करोतीति विद्वानन्यो योऽज्ञो जन्तुर्देह एव भोजनादिकं कर्म करोति क्रियते विक्रियते च तेन कर्मणा पुष्ट्या व्याधिना
वा सोऽसौ केनापि संस्कारादिना चोदितः सन् आनिपातात् मरणपर्यन्तं करोति विद्वांस्तु प्रकृतौ देहे स्थितोपि तत्र कर्म

राम:

किं चात्मनोऽतनावैदेहिककर्मभिर्विकारशंका यतो देहमध्यस्थो न पश्यतीत्याह तिष्ठंतमिति उक्षंतं मूत्रयंतं तत्स्वभावप्राप्तम।
न्यदपि दर्शनस्पर्शनादि ईहमानं कुर्वंतमात्मानं देहं ३१ नन्विंद्रियवृत्तेः सर्वथा कथमदर्शनं संभवति तत्राह यदि स्मेति य।
द्यपि असतो बहिर्मुखानामिंद्रियाणामर्थं पश्यति तथापि नानात्वान्मिथ्या स्वप्नवदित्यनुमानेन विरुद्धं बाधितं तस्मात्तद
न्यदात्मव्यतिरिक्तं मनीषी वस्तुतया न मन्यते स्वापादुत्थाय प्रबुध्य संस्कारमात्रेण स्वाप्नं विषयं स्फुरंतं अत एव स्वय।
मेव तिरोभवंतं यथा तद्वत् ३२ तदेवमात्मा न विक्रियत इत्युक्तं नन्वेतदनुपपन्नं बद्धावस्थयापास्यमानत्वात् मुक्तावस्थ

तिष्ठंतमासीनमुत व्रजंतं शयानमुक्षंतमदंतमन्नं स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थ
मतिर्न वेद ३१ यदि स्म पश्यत्यसदिंद्रियार्थं नानानुमानेन विरुद्धमन्यत् न मन्यते वस्तुतया
मनीषी स्वाप्नं यथोत्थाय तिरोदधानं ३२ पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तम
ङ्ग निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ३३ यथा हि भानोरुदयो नृचक्षु
षां तमो निहन्यान्न तु सद्विधत्ते एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥

याच गृह्यमाणत्वात् न हि व्रीहयोऽवघातेन व्रीहिभावत्यागतस्तंडुलीभावेन गृह्यमाणा न विक्रियंते तत्राह पूर्वमिति
बंधावस्थायां गुणैः कर्मभिश्च चित्रमज्ञानकार्यं देहेंद्रियादिलक्षणं आत्मन्यध्यासेनाविविक्तं गृहीतमासीत् तदेव
पुनर्ज्ञानेन निवर्तते आत्मा तु न केनापि रूपेण गृह्यते नापि त्यज्यते अयं भावः मुक्तेः क्रियाफलत्वे तावदात्मनो वि
कारः तस्यास्त्वारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वं बंधमोक्षयोः अतो न विकार इति ३३ एतदेव
दृष्टांतेन स्पष्टयति यथेति न तु पूर्वमेव सद्घटादि पुनर्विधत्ते करोति या समीक्षा आत्मविद्या ३४ ॥

आत्मनो निर्विकारतां प्रपंचयति एषः इत्यनेनापरोक्षतया नित्यप्राप्तस्यात्मनः प्राप्तिं वारयति स्वयंज्योतिरिति अज्ञा-
नमलापाकरणलक्षणां विकृतिं वारयति अजः इत्युत्पत्तिं वारयति अप्रमेय इति ज्ञानलक्षणातिशयाधानेन संस्का-
रं महानुभूतिरिति देशकालपरिच्छेदाभावेनास्तित्ववृद्धिविपरिणामापक्षयनाशान् स्वयंज्योतिष्ट्वादेहेतुः स-
कलानुभूतिरिति एकोऽद्वितीय इति विकारहेतोरन्यस्याभावान्न कोऽपि विकार इति दर्शयति ननु श्रुतिविषय-
स्य कथं स्वयंज्योतिष्ट्वादित्यत आह वचसां विरामे अगोचरत्वेन निर्दिष्टोऽसत्त्वात् तथा च श्रुतिः यतो वाचो निवर्तन्ते अ-
प्राप्य मनसा सहेति तत्र हेतुः येनेषिताः प्रेषिताः तथा च श्रुतिः केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति

वर

एषः स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः । एकोऽद्वितीयो वचसां विरा-
मे येनेषिता वागसवश्चरंति ३५ एतावानात्मसंमोहो यद्विकल्पस्तु केवले आत्मन्नृते
स्वमात्मानमवलंबो न यस्य हि ३६ ॥ होर

युक्तः केनेषितां वाचमिमां वदंति चक्षुः श्रोत्रं क उ देवो युनक्ति श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स प्राणस्य
प्राणश्चक्षुषश्चक्षुरिति ३५ अद्वितीयं प्रतिपादयितुं भेदस्यावास्तवत्वमाह एतावानिति केवले अभिन्ने आत्मनि
विकल्प इति यत् एतावान् सर्वोऽपि आत्मनो मनसः संमोहः भ्रमः यतः स्वमात्मानमृते विना यस्य विकल्पस्य
अवलंबः आश्रयो नास्ति रज्जौ सर्पस्येव श्रुतिः किं विना नेह नानास्ति किंचन ॥ इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्य- ॥
स्य हरयः शता दश इत्येवमित्यादिश्रुतेरित्यर्थः ३६ ॥

केचित्तु नः प्रत्यक्षादिप्रतीतप्रपंचस्य बाधायोगाद्द्वैतानां चक्रत्वर्थं कर्तृप्रतिपादनपरत्वेनार्थवादत्वात् द्वैतस्य
त्वमिति मिथ्यैतेनामतमनूद्य दूषयति यदिति नामाकृतिभिः नामरूपोपलक्षितं पंचभूतात्मकं द्वैतं यत् तत्तद्
बाधितमिति पंडितमानिनो अत्र वयमेव पंडिता इत्यभिमानवन्तो वैदान्तिकप्रवादमर्थवाद इति प्रीतितिः न तत्त्वविरो
धतः अर्थेनापि विनाप्यर्थेन सा प्रतीतीतिः तथाहि नानावादिलोकवाक्यत्वेतेषामस्तित्वेनार्थवादत्वं स्यात् न चाक
र्तृ मोक्ष परमानंदात्मप्रतिपादनेक मविधिशेषतानभजनेन चाबाधितत्वं द्वैतस्य नामरूपात्मकत्वात् नाम्नां
तं पंचवर्णात्मकत्वात् स्वप्नवद्दृश्यत्वाद्यनुमानैर्वाचारंभणादिश्रुतिभिश्च बाधितत्वादिति ३७ तदेवज्ञानयोग

यन्नामाकृतिभिर्ग्रस्तं पंचवर्णमबाधितं । अर्थेनाप्यर्थवादोयं द्वैतं पंडितमानिनां ३७ ॥
योगिनो युक्तयोगस्य युंजतः कायदुस्थितेः । उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ३८ ॥
योगधारणया कांश्चिदासनैर्धारणान्वितैः । तपोमंत्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ३९ ॥
कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः । योगेश्वरानुवृत्त्या वा हन्यादशुभदाञ्छनैः ४० ॥
केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरं । विधाय विविधोपायैरथ युंजंति सिद्धये ४१ ॥
न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः । अंतवत्त्वाच्छरीरस्य

स्य परिकरं निरूप्येदानीं तन्निरोगाद्युपद्रवैः अभिभवे तत्रायं विधिः प्रतीकारः ३८ योगधारणया सोमसूर्यादि
धारणया संतापशैत्यादीन् आसनैर्वायुधारणान्वितैः वातादिरोगान् तपोमंत्रौषधैः पापग्रहसर्पादिकृतान्
३९ ममानुध्यानादिभिः कामादीन् योगेश्वरानुवृत्त्या दंभमानादीन् हन्यात् ४० अन्ये तु देहसिद्ध्यर्थमेवैतत्क
र्वंतीत्याह द्वयेनेति केचिदिति केचित्तु नरेतरं येन केनाप्युपायैर्देहमिमं सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थि
रं च कृत्वा परकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युंजंति न तु ज्ञाननिष्ठारूपं ४१ कुशलैः प्राज्ञैराद
रणीयं न भवति वनस्पतिवदात्मैव स्थायी शरीरं तु फलवन्नश्वरमित्यर्थः ४२ ॥
एतस्य विघ्नप्रतीकारमाह योगिन इति त्रिभिः योगं युंजतः कायोपद्रवैः वा बन्नेरुपसर्गैः ॥ ६ ॥

न नु क्वचित्समाधिभंगत्वेनापि प्राणायामादियोगे किंप्रमाणो जरारोगाभावो दृश्यते सत्यं तथापि समाधिमुत्सृज्य
न तत्र सज्जेतेत्याह योगमिति तत्तारेह सिद्धिं न श्रद्दध्यान्न विश्वसेत् ४३ तदेवं विघ्नप्रतीकारैर्योगं कुर्यादित्युक्तं
मद्भक्तस्य तु न विघ्नशंकापीत्याह योगचर्यामिमिति चरन् आचरन् स्वसुखे अनुभूः अनुभूतिर्यस्य स हा मत्ता
हि विघ्नाः सा च मदपाश्रयस्य निवर्तते अतो नांतरायैर्विहतः स्वानंदपूर्णो भवतीति ४४ समाहृत्य सर्वयोगं तु सम
स्तोपनिषदर्थसंग्रहमुख्यतमो भक्तिमुक्तो पुनरुपादिशत् इत्येकादशे ऽष्टाविंशः २८ ऊनत्रिंशे तु यः पूर्वं वि
णः स्तरैर्निरूपितः भक्तियोगस्तमेवाह स्वभक्ताय समासतः २ अतिक्लेशामिवालक्ष्य योगे संगेकसंपदि सु

योगं निसेवतो नित्यं कायश्चेत्कल्पतामियात् तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य
मत्परः ४३ योगचर्यामिमां योगी विचरन्मदपाश्रयः नांतरायैर्विहन्येत निस्पृहः स्वसु
खानुभूः ४४ इति श्रीभागवते ११ स्कंधे ऽष्टाविंशोध्यायः २८ उद्धव उवाच सुदुश्चरा
मिमां मन्ये योगचर्यामनात्मनः यथांजसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यंजसाच्युत १ प्राय
शः पुंडरीकाक्ष युंजंतो योगिनो मनः विषीदंत्यसमाधानान्मनोनिग्रहकर्शिताः २
अथात आनंददुघं पदांबुजं हंसाः श्रयेरन्नरविंदलोचन सुखं नु विश्वेश्वर योगकर्म

खोपायं पुनः कृष्णमुद्धवः परिपृच्छति २ अनात्मनः अवशीकृतमनसः अंजसा अप्रयासेनोपायाभिप्रेत तत्प्रांज
जसा सुबोधं यथा तथा मे ब्रूहि १ सुदुश्चरत्वं प्रपंचयति प्रायश इति मनः युंजंतः निरुंधंतः विषीदंति खिद्यंति कुतः अ
समाधानात् अनिग्रहात् कथंचिन्मनसो निग्रहेण च कर्शिताः श्रांताः अतः प्रायश इत्येके च न विषीदंतीत्यर्थः अथात इति अ
त एव ये हंसाः सारासारविवेकचतुराः ते तु आनंददुघं समस्तानंदपरिपूरकं तव पदांबुजमेव सुखं यथा भवति तथा
निश्चितं श्रयेरन् सेवेत अमी तु त्वन्मायया विहताः [illegible] मानिनः संतो न श्रयंते यद्वा अमी त्वद्भक्ताः
त्वन्मायया न हताः अत एव योगकर्मभिः कृष्टा मानिनो न भवंति अन्ये तु त्वन्मायया मोहिताः संतो वर्षयोगरताः

त्वद्भक्तास्त्वत्प्रसादेन कृतार्थी भवंतीति नातिचित्रमित्याह किमिति अनन्यशरणेषु दासेषु तव यदात्मसात्त्वं मदधीनत्वे
यत्नप्रयाणे स्त्रोपीवलिप्रभृतिषु एतत्किं चित्रं नाश्चर्यमित्यर्थः यतो यो भगवान् श्रीरामरूपेण मृगैर्वानरैः सह सहित्वा
सख्यमितियावत् अरोचयत् त्याकृते वानरु कथंभूतः ईश्वराणां ब्रह्मादीनां यानि श्रीमंति किरीटानि तेषां तटानि तैः
तैः पीडितं विलुंठितं पादपीठं यस्य तव पूतप्रयोभूतोपि सन् ३ अनन्यत्वा परित्यज्य को नाम आत्मत्सं अर्थयेदित्याह तं त्वेति
तमेव त्वां को नु विसृजेत् न भजेत् कथंभूतः स्वकृतविलेवलि प्रह्लादादिसुलयाकृतमनजगन्नहं जानन् यद्वा स्वास्मि।
न्नेवांतर्यामितया कृतमुपकारं विद्वानतरेवाह अखिलात्मदयितेश्वरं अखिलस्य जगतः आत्मानं चेतोयन्तारं स्वा

किं चित्रमच्युत तवैतदशेषबंधो दासेष्वनन्यशरणेषु यदात्मसात्त्वं यो रोचयत्सह मृगैः स्व
यमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ४ तं त्वाखिलात्मदयितेश्वरमाश्रिता
नां सर्वार्थदं स्वकृतविद्विसृजेत को नु को वा भजेत्किमपि विस्मृतयेनु भूत्यै किं वा भवेन्न
तव पादरजोजुषां नः ५ नैवोपयंत्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरंतः
योंतर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति ६ ॥ तत्वाद्देवरपितं प्रबंधमुसेवाई

श्वरत्वाद्देव भजनीयः किंच आश्रितानां सर्वार्थदं तर्हि किं फलोद्देशेनाहं सेव्यः नाहि न किमपि अनरकं त्वद्रतिरि
क्तं स्वर्गादि त्वया दत्तमपि को वा भजेत् सेवेत कथंभूतः तत्त्व यत्केवलं भसेद्द्रियभोगाय अनन्तरमेव त्वाद्दस्मृतये मोक्षा
य वा को भजेत् न कोपि न तु तत्साधने विना भोगमोक्षादिफलं कथमात्तत्राह किं वेति तदुक्तेयावे साधनसंपत्तिः
मार्थं च तु षड्पेतया विना न दासोतिनरो नारायणाश्रय इति ५ आस्तामन्यभजनवार्ता त्वत्कृतोपकारस्य तत्प्रत्यात्मनि
वेदनेनैव च निष्कृतिर्नास्तीत्याह नैवेति अपचितिं प्रत्युपकारं आनृण्यमितियावत् कवयो ब्रह्मादिरोपि नैव प्रा।
प्नुवंति यतस्त्वत्कृतमुपकारं स्मरंतः ऋद्धमुदः उपचितपरमानंदाः उपकारमेवाह यो भगवान् बहिराचार्यवपुषा गु
रुरूपेण अंतश्चैत्यवपुषा अंतर्यामिरूपेण अशुभं विषयवासनां विधुन्वन् निरस्यन् स्वगतिं निजं रूपं प्रकटयतीति

चतुर्द्दशीयति ब्राह्मणे पुक्कसे इति स्नातिते नो वैषम्यं पुक्कसोऽन्त्यजविशेषः स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो
दातरीति कर्मतः अर्के विस्फुलिंगके इति गुणतः अक्रूरे शान्ते क्रूरे चेति स्वभावतः १४ नरेष्वीश्वरदृष्टिं कुर्वतः सा
द्यः फलविशेषमाह नरेष्विति समोत्तमहीनेषु स्पर्द्धासूयाः स्वस्मिन्नहंकारश्च हि निश्चयेन वियन्ति नश्यन्ति १५ अतोऽन
यासी श्वरदृष्ट्या सर्वान्प्रणमेदित्याह विसृज्येति स्मयमानान् हसतः स्वान् सखीन् तथा दैहिकीं दृशं अहमुत्तमः
स तु नीचः इति दृष्टिं तथा दृश्याया व्रीडां तां चे विसृज्य अश्वचाण्डालादीनपि आभ्य प्रणमेत् विरोधं न कुर्यादित्यर्थः १६ ॥

ब्राह्मणे पुक्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिंगके अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः १४ न
रेष्वभीक्ष्णं मद्भावं पुंसो भावयतो चिरात् स्पर्द्धासूयातिरस्काराः साहंकारा वियन्ति हि १५
विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीं प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरं १६ याव
त्सर्वेषु भूतेषु मद्भावो नोपजायते तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः १७ सर्वं ब्रह्मा
त्मकं तस्य विद्ययात्ममनीषया परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः १८ अयं हि सर्व
रा॰२ कल्पानां सध्रीचीनो मतो मम मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः १९ न ह्यङ्गोपक्रमे ध्वं
सो मद्धर्मस्योद्धवाण्वपि मया व्यवसितः सम्यक् निर्गुणत्वादनाशिषः २० ॥

एवं च त्रिभिः श्लोकैरुक्ता।
याः समदृष्टेरवधिमाह यावदिति १७ तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति कुतः आत्ममनीषया स।
र्वत्रेश्वरदृष्ट्या या विद्या तया अतः परितो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत् १८ किमयमेवोपायः अवि
वान्योऽपि त्वया अपि सन्ति बहवः समीचीनस्त्वयमेवेत्याह अयं हीति १९ भगवद्धर्मत्वयोपायस्य समीचीनत्वं।
मेवोपपादयति न हीति द्वाभ्यां अंग हे उद्धव अस्य नाशिषो निःकामस्य मद्धर्मस्योपक्रमे सति आवयिद्धयपि वैगुण्या
दिभिर्न्नाशो नाल्पमपि यतो मयैव निर्गुणत्वात् धर्मः सम्यक् व्यवसितो निश्चितः न तु मन्वादिभिस्तेन कथंचित् २०

किंच योयइति अयमर्थः किंवत् कथं मद्धर्मस्य नध्वंसइतियतो लोकिको विधियो निरर्थः अर्थः स्यात् यातो पिम
यिपरे निःफलाय चेत् कल्प्यते निकामनया र्पितस्तेन नहि धर्मप्रकुस्तात् निरर्थो यासेदृष्टांतः यथा भयशोका
देर्हेतोः पलायनाक्रंदनादि क्रियाः न द्रुत् २१ अतो मद्भजनमेव बुद्धि विवेकस्य मनीषायाश्चानुर्यस्य च फलमित्याह
एषेति तामेव दर्शयति एतस्य ममस्तं च मामाप्नुयात् तेनात्मनेन मर्त्येन विनाशिना मनुष्यदेहेन इह अस्मिन्नेव जन्मनि
मामोति नियतस्येव बुद्धिर्मनीषा च नि बुद्धि विवेकः मनीषा चातुर्य २२ महाप्रकरणार्थमुपसंहरति एषतइति द्वाभ्यां

योयो मयि परे धर्मः कल्प्यते निष्फलाय चेत् तदायासो निरर्थः स्याद्भयादेरिव सत्तम २१
एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणां यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतं २२ ए
षतेभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः समासव्यासविधिना देवानामपि दुर्गमः २३ अ
भीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः २४ सु
विविक्तं तव प्रश्नं मयैतदपि धारयेत् सनातनं ब्रह्मगुह्यं परं ब्रह्माधिगच्छति २५ यएत
न्मम भक्तेषु संप्रदद्यात्सुपुष्कलं तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना २६ यएत
त्समधीयीत पवित्रं परमं शुचि सपूयेताहरहर्मां ज्ञानदीपेन दर्शयन् २७ यएतच्छ्रद्धया नि
त्यमव्यग्रः शृणुयान्नरः मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते २८ ॥ समासव्यासविधिना संक्षेप

विस्तारप्रकारेण २३ किंच अभीक्ष्णमसकृत् ज्ञानं तत्त्वस्य संधानकथनपठनश्रवणापराणामप्येतदेव फलं नत्वन्यत् आह च
तुर्भिः सुविविक्तमिति मया सुविविक्तं दत्तोत्तरं एतत् ज्ञानं यो धारयेत् अर्धं अनुसंदध्यात्स ब्रह्मगुह्यं वेदरहस्यं
२५ सुपुष्कलं यथा भवति तथा ब्रह्मदायस्य ब्रह्मप्रदस्य ददातीति तथा तस्य आत्मनो वरेणु २५ समधीयीत उच्चैः पठेत् परम
शुचि अन्येषामपि शोधकं दर्पेण शुद्धेन २६॥२७॥

प्रणयेनावघूर्णितं द्रुमितं चित्तं धैर्येण विष्टभ्य बहु मन्यमानः आत्मानं कृतार्थं मन्यमानः ३४ सपाय आश्रि
त आसीत् तत्तव सन्निधानेनैव विद्रावितः प्रभवति किं न बाधाय समर्थो भवेति प्रजाद्य ब्रह्मणो पि जनक
३६ किं च यद्यपि तव सन्निधानाद्देवगतः तथाप्यनुकंपिना भवता विज्ञानमयः प्रदीपः प्रत्यर्पितः स्वमायया
परतः पुनः समर्पितः अतस्तव कृतज्ञः यस्त्वया कृतमनुग्रहं जानाति स को नाम त्वदीयपादमूलं हित्वान्य
च्छरणं समीयात् आश्रयेत ३७ किं च दाशार्हादिषु त्वयापि स्वमायया स्नेहपाशः प्रसारितः स त्वयैवात्म

विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्बहुमन्यमानः कृतांजलिः प्राह यदुप्रवीरं शी
र्ष्णा स्पृशंस्तच्चरणारविंदं ३५ उद्धव उवाच विद्रावितो मोहमहांधकारो य आश्रितो मे त
व सन्निधानात् विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवंत्यजाद्य ३६ प्रत्यर्पि
तो मे भवतानुकंपिना भृत्याय विज्ञानमयः प्रदीपः हित्वा कृतज्ञस्तव पादमूलं को न्यं स
मीयाच्छरणं त्वदीयं ३७ वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यंधकसात्वतेषु प्रसा
रितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ३८ नमोस्तु ते महायोगिन्प्रप
न्नमनुशाधि मां यथा त्वच्चरणांभोजे रतिः स्यादनपायिनी ३९ श्रीभगवानुवाच ग
च्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रमं तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ४०
ईक्षयालकनंदाया विधूताशेषकल्मषः वसानो वल्कलान्यंग वन्यभुक्सुखनिस्पृहः ४१

तत्वज्ञानशस्त्रेण वृक्णः छिन्नः ३८ एवं यद्यपि त्वया बहु कृतं तथाप्येतावत्प्रार्थये इत्याह नमोस्त्विति अनु
शाधि अनुशिक्षय अनुशासनोपमाह यथेति भक्त्यावप्यनपायिनी ३९ तदुक्तमंगीकृत्य तथापि मयादि
ष्टो लोकसंग्रहार्थमेतावत्कुर्विति आह गच्छेति आदिष्टो नियुक्तः ४० स्नानादेः पूर्वमेव मत्पादतीर्थोदक
भूताया अलकनंदाया गंगाया ईक्षया वसानः परिधान वन्यभुक् यथाप्राप्तभोजी ४१ ॥ ॥

६५

एवं कृतोपदेशं जगद्गुरुं प्रणमति भवभयमिति भवः संसारः भयं च जरारोगादि मिश्रितं तदुभयं निवृत्तं नीय। =
ज्ञानं च भृत्यवर्गाणां पायया योस्य भयहर्तुं योम् तद्द्वयमुपजह्रे उद्धृतवान् तत्र वेदार्थ वेदसारमेकं किं तत् ज्ञान
विज्ञानरूपं च तत्सारे श्रेष्ठं च भृंगवत् भृंगो यथा पुष्पमकोपयन्नेव मधु तमुपहरति तथा स्वयं वृत्तं कृत वेद
सारेणोदधितो मथितं श्रीकृत् स्वीभयं पायया पाययं भृत्यवर्गान पाययत् तं नतोस्मीति ४९ येनानुकंपितं विश्व
मुद्धवप्रश्नानि तीर्थैः तं वंदे परमानंदनंदनंदनरूपिणं ॥ इत्येकादशे एकोनत्रिंशः २९ त्रिंशे तु प्रागुपोद्धृ =

भवभयमपहर्तुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृंगवद्वेदसारं अमृतमुदधितश्चापाय
यद्भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोस्मि ४९ इति श्रीभागवते०ए०थे० भगवदुद्धवसंवा
दे बदरीप्रवेशो नाम एकोनत्रिंशोध्यायः २९ राजोवाच ततो महाभागवत उद्धवे निर्गते व
ने द्वारवत्यां किमकरोद्भगवान्भूतभावनः १ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् २ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः
कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नं यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां
दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ३॥ प्रभोशालतः लक्षलतो हरिः स्वधाम गंतुमन्विच्छन् संजहा
र निजे कुले १ विरागाय पुरा घोरमुपादिष्टं हि मौशलं कथावसाने नत्रैव विशेषं परिपृच्छति २ ततः इति त्रिभिः १ ब्र
ह्मशापोपसृष्टे कुले सति अयं भाव भगवति न हि शापः प्रभवति या देवलानुकरणाच्च सोपि कथं चित्सोन्यः अतः किं
मकरोदिति तदेतद्देह कथमत्यजदिति सर्वनेत्राणामिति सर्वदृष्टियोपलक्षणं २ तस्यैव चपलं प्रत्याकृष्टुमिति यस्मिन्
रूपे लग्नं नयनं पराववर्तयितुमबला न शेकुः यच्च कर्णरंध्रेण प्रविष्टं सत्सतामात्मनि लग्नं विलीनमिव विलिष्टं ।
ततो न सरति न निर्गच्छति यस्य श्रीः शोभा संकीर्त्यमाना कवीनां वाचां रतिमुत्तमां सविशेषं जनयति तेषां मानं ज
नयतीति किं संकीर्त्यमानाच्च विशेषो रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यं

स्पर्द्धानिमित्तः क्रोधः कुलं क्षयं निन्ये २४॥ २५ पौरुषं योगं परमपुरुषध्यानलक्षणं तमेवाह संयोज्येति मानुष्यं।
लोकं मर्त्यलोकं मनुष्यरूपतां वा २६ धरोपस्थे भूतले २७ भ्राजिष्णु रूपं २८ तदेवानुवर्णयति श्रीवत्साङ्कमि
ति चतुर्भिः २९ सुंदरस्मितवक्त्राब्जं इत्यस्मिन् तत्र निजायुधैश्च परीताङ्गं पंकजारुणं वामं पादं दक्षिणोरौ

ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनां। स्पर्द्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनं २४ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः। अवतारितो भुवो भार इति मेनेऽवशेषितः २५ रामः समुद्रवेलायां योगमास्थाय पौरुषं तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि २६ रामनिर्याणमालोक्य भगवान् देवकीसुतः। निषसाद धरोपस्थे तूष्णीमासाद्य। पिप्पलं २७ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया दिशो वितिमिराः कुर्वन् विधूम इव पावकः २८ श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसं कौशेयाम्बरयुग्मेन परिवीतं सुमंगलं २९ सुंदरस्मितवक्त्राब्जं नीलकुन्तलमण्डितं पुंडरीकाभिरामाक्षं स्फुरन्मकरकुंडलं ३० कटिसूत्रब्रह्मसूत्रकिरीटकटकांगदैः हारनूपुरमुद्राभिः कौस्तुभेन विराजितं ३१ वनमालापरीतांगं मूर्तिमद्भिर्निजायुधैः कृत्वोरौ दक्षिणे पाद। मासीनं पंकजारुणं ३२ मुषलावशेषायःखण्डकृतेषुर्लुब्धको जरा मृगास्याकारे चरणं विव्याध मृगशंकया ३३ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः भीतः पपात शिरसा पादयोरसुरद्विषः ३४ अजानता कृतमिदं पापेन मधुसूदन क्षन्तुमर्हसि

कृत्वा आसीनं रूपं बिभ्रत् ३२ जरा नाम कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं चरणं ३३।२४॥

३६।।३७।। ब्रह्मशापकृतमेतत् न तवापराध इति चेत्तत्राह यस्येति वा त्वया गरुचितं स्वाधीनमायारचितं
विरिंच्यः अस्य तेन यारुद्रादयः ये चान्ये गिरांपतयो वृहस्पत्यादयः ते पि न विदुः तस्य ते अचिन्त्यमायस्य तद्
ब्रह्मशापादि अंजसा अस्मद्भूतयः पापयोनयो वयं किं गृणीमः कथं वर्णयामः अतस्त्वदाज्ञा आज्ञामेवाप

यस्यानुस्मरणं नॄणामज्ञानध्वान्तनाशनं वदंति तस्य ते विष्णोर्मया साधु कृतं प्रभो
३६ तस्मात्गुञ्जहि वैकुण्ठपार्षदानेष मङ्गलध्वजके यथाहं नरहेत्वेवं न कुर्यां स इति क्रमे
३७ यस्मात्त्वयोगरचितं न विदुर्विरिंचो रुद्रादयो यतनयाः पतयो गिरां ये तन्मायया
पिहितदृष्टय एतदंजः किं तस्य ते वयमसद्गतयो गृणीमः ३८ श्रीभगवानु० मा भैर्ज
रेत्वमुत्तिष्ठ कामं ते ब्रह्मकृतो हि मे यतो हि त्वं मदनुज्ञातः स्वर्गं भुङ्क्ष्व तिना परं ३९ श्रीशु०
इत्यादिष्टो भगवता कृत्स्नेन छायाशरीरिणा त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ
४० दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य तां वायुं तुलसिकामोदमाघ्रायाभिमुखं
ययौ ४१ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिं स्नेहप्लुतात्मा
निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ४२ अपश्यतस्त्वच्चरणांबुजं प्रभो
दृष्टिः प्रनष्टा तमसि प्रविष्टा दिशो न जाने न लभे च शांतिं यथा निशायामुडुपे च
नष्टे ४३ इति ब्रुवति सूते वै रथो गरुडलाञ्छनः खमुत्पपात राजेन्द्र साश्वध्वज उदी

राधारणोपापकर्मणा महापुरुषजहीतिभावः ३८।३९ इच्छाशरीरिणोस्यापि भावः शुद्धसत्त्वमयी निजेच्छा
मूर्तिमंतर्धापयत्त्वाति प्रकृत्यैव विश्वं नामात्रमिति एतदेव स्फुटीकरिष्यति देवादयो ब्रह्ममुख्या इत्यादिना
४१।।४२।। तं पतितं तत्र दृष्ट्वा तस्य पादयो निपपात ४२।।४३।। उदीर्णमाणस्य सूतस्य सतः ४४।। ।।राम:

राम:।।

४५॥ निर्याणं योगमार्गेण महत्त्वामिति इच्छाशरीराणि मायेया ४६।४७ अविनाशस्यमाणाः इदं प्रस्थमगिष्यथेति कृ-
हीतिपूर्वेणान्वयः ४८ मन्मायारचनामेतां विज्ञायेति निजश्रीमल्लैरन्तर्हितत्वान्नरूपाशोके माकुरु वितर्पीः ४९ कुल-
स्यविनष्टत्वाद्दुर्मनाः ५० इति एकादशे त्रिंशतमः ३० एकत्रिंशके धाम जगाम भगवानितः तत्रानुयत्तुः श्रीत्यावसु

तमन्वगछन्दिव्यानि विष्णुप्रहरणानि च तेनातिविस्मितात्मानं सूतमाह जनार्दनः ४५
गछ द्वारवतीं सूत ज्ञातीनां निधनं मिथः संकर्षणस्य निर्याणं बंधुभ्यो ब्रूहि मद्दशां ४६
द्वारकायां च न स्थेयं भवद्भिश्च स्वबंधुभिः मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ४७ स्वं
स्वं परिग्रहं सर्वे आदाय पितरौ च नः अर्जुनेनाविताः सर्व इंद्रप्रस्थं गमिष्यथ ४८ त्वं तु
मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः मन्मायारचनामेतां विज्ञायोपशमं व्रज ४९ इ-
त्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीं ५०
इति श्रीभा० एकादशस्कंधे मौशले त्रिंशत्तमोध्यायः ३०॥ श्रीशुक उवाच अथ तत्रागमद्ब्र-
ह्मा भवान्या च समं भवः महेंद्रप्रमुखा देवा मुनयः सप्रजेश्वराः १ पितरः सिद्धगंधर्वा
विद्याधरमहोरगाः चारणयक्षरक्षांसि किन्नराप्सरसो द्विजाः २ द्रष्टुकामा भगवतो
निर्याणं परमोत्सुकाः गायंतश्च गृणंतश्च शौरेः कर्माणि जन्म च ३॥

देवाद्यस्तत्र १ देवान्यदृन्वि-
धायाहेतुभूयो देवान्विधाय च श्रीकृष्णः स्वेच्छया धाम स्वतन्त्रैव समाविशत् २ मुनयः सनकादयः प्रजेश्वरा
मरीच्यादयः १ द्विजा गरुडलोकवासिनः पार्षदाः मैत्रेयादयो वा २ भगवतो निर्याणं द्रष्टुकामाः सन्तः पर-
मोत्सुकाः सन्तस्तत्रागमन् तेषामौत्सुक्यं कृतं महोत्सवमाह सार्द्धेन गायन्तश्चेति ३॥ रामः रामः॥

अविज्ञातगतित्वं दृष्टान्तेन स्पष्टयति सौदामिन्या गतिर्यथा मर्त्यैर्न लक्ष्यते देवैस्तु लक्ष्यते तथाभ्रमंडलं।
हित्वा गच्छतः श्रीकृष्णस्य देवैरपि न लक्ष्यते किंतु तन्मार्थैर्देवैरेवेत्यर्थः ९।१० अभिप्रायापरिज्ञानतः प्रेथ
मङ्क्रि दृष्टान्तेन स्पष्टयन् मुक्तेर्हेतुं दृष्ट्वा पुनस्तमेवार्थं प्रपंचयति राजन्निति त्रिभिः परस्य सर्वकारण
स्य तनुभृत्सु यादवादिषु जननाप्ययेहा आविर्भावतिरोभावचेष्टाः मायया अनुकरणमात्रमवेहि नटो
यथा विकृत एव नानारूपै जन्मादि विडंबयति तद्वत् आस्तां तावद्यादवादिषु जन्मादिशंकाभावः किंच।

सौदामिन्या यथाकाशे यान्त्या हित्वाभ्रमंडलं गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैव
तैः ९ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययु
स्तदा १० राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडंबनमवेहि यथा नटस्य सृष्ट्वा
त्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिनोपरतः स आस्ते ११ मर्त्येन यो गु
रुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धं जिग्येऽन्तकान्तकमपीश
मसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहं १२ ॥

सर्गनिरोधादिष्वप्यवसावविकृत एवे
त्याह सृष्ट्वेति आत्मना स्वयमेवेदं जगत् सृष्ट्वा अन्तर्यामित्वेनानुविश्य आत्ममहिना स्वमहिम्ना उपरत आ
स्ते ११ न पुनरन्येषामिवास्य तत्रासक्तिर्नैवावतारे तत्प्रभावो निरतिशयो दृष्ट इत्याह मर्त्येनेति येन स्वलोकं
प्रतिनीतं गुरुसुतं मर्त्येन तेनैव शरीरेण आनयत् आनीतवान् शरणदः शरणागतरक्षकः त्वां च ब्रह्मा
स्त्रदग्धं योरक्षितवान् यश्च अन्तकानामन्तकमपीशं श्रीरुद्रं बाणसंग्रामे जितवान् स मृगयुं लुब्धकं नाम
स्वः स्वर्गमनयत् निन्ये असौ स्वावने स्वरक्षणे अनीशः असमर्थः किं १२ ॥ ॥

ननु यदि समर्थः तर्हि किं चिरकालं अत्रैव तेन वपुषा किं नातिष्ठत् तत्राह तथापीति यद्यपि उक्तप्रकारेणाशेषजगत्स्थित्यादिष्वनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मदशेषशक्तिधृक् तथापि यादवान् संहृत्य निजं वपुः अत्र शेषितं अवशेषितं प्रणेतुं कर्तुं नैच्छत् किंतु स्वमेव लोकमनयत् तत्र हेतुः मर्त्येन देहेन किं न किं चिरकालं यमिति स्वस्थानां आत्मनिष्ठानां दिव्यां गतिमेव प्रकर्षाद्दर्शयन् अन्यथा तेपि दिव्यां गतिम।

तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् १३ य एतां प्रातरुत्थाय कृष्णस्य पदवीं परां प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमां १४ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः पतित्वा चरणावस्रैर्न्यषिंचत्कृष्णविच्युतः १५ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्छिताः १६ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः व्यसवः शेरते यत्र ज्ञातयो घ्नंत आननं १७ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ कृष्णरामावपश्यंतः शोकार्ता विजहुः स्मृतिं १८ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः १९ राजपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः २०॥

नात्मयोगबलेन देहसिद्धिं विधायात्रैव चिरं तु यतेरन् तस्मात् दिव्येतद्दर्शयितुमिति भावः १३ एतामुक्तप्रकारां पदवीं गतिं १४ तदेवं भगवतः स्वलोकं गच्छतो वसुदेवादीनामपि तत्प्राप्त्युपाय इति आसीन् माहदारुक इत्यादिना पतेः कृष्णविच्युतः भगवद्विरहमापन्नः तच्छोकाद्बनेत्रांबुना असिंचदित्यर्थः ॥१५॥१६॥१७॥ कृष्णरामौ सुतौ

सदुक्तिभिः सत्योक्तिभिः त्वया तुल्ययोः येभ्युते नाहंप्रकाशः सर्वस्ययोगमायासमावृतः मूढोयेनाभिजानाति लोकोमाम् अजमव्ययमित्यादिभिः २१ नष्टगोत्राणां नष्टसंततीनां वधूनां सांपरायिकं पिंडोदकादिकार्यं २२ २२ २३ २४ २५ आदित आरभ्य श्रीकृष्णचरितकीर्तनफलमाह य एतदिति द्वाभ्यां २६ शंतमानि परममंगलानि परमहंसगतौ

अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः आत्मानं सांत्वयामास कृष्णगीतैः सदुक्तिभिः २१ बंधूनां नष्टगोत्राणामर्जुनः सांपरायिकं हतानां कारयामास यथावदनुपूर्वशः २२ द्वारिकां हरिणा त्यक्तां समुद्रो —— प्लावयत् वर्जयित्वा महाराज श्रीमद्भगवदालयं २३ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः स्मृत्याशेषाशुभहरः सर्वमंगलमंगलं २३ स्त्रीबालवृद्धानादाय हतशेषान्धनंजयः इंद्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् २४ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः त्वां च वंशधरं कृत्वा जग्मुः सर्वे महापथं २५ य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते २६ इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि अन्यत्र चेह च कृतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत २७ इति श्रीभागवते महापुराणे एकादशस्कंधे मौशलकथनं नाम एकत्रिंशोध्यायः ३१॥

श्रीकृष्णे २७ एवमेकादशस्कंधभावार्थस्य दीपकास्याज्ञानध्वांतभीतेन श्रीधरेण प्रकाशि ॥ इत्येकादशस्कंधभावार्थदीपिकायामेकत्रिंशोध्यायः ३१

संवत् १८१३ मास आषाढ कृष्णपक्ष वदि १० लिखितं मलचंदेन ॥ रामायनमः ॥

रामः